# आश्वलायनश्रौतसूत्रम्

श्रीगणेशाय नमः

अथैतस्य समाम्नायस्य विताने योगापत्तिं वक्ष्यामः १ अग्न्याधेयप्रभृतीन्याह वैतानिकानि २ दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामस्तन्त्रस्य तत्राम्नातत्वात् ३ दर्शपूर्णमासयोर्हविःष्वासन्नेषु होतामन्त्रितः प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य दक्षिणावृद्विहारं प्रपद्यते पूर्वेणोत्करमपरेण प्रणीताः ४ इध्ममपरेणाप्रणीते ५ चात्वालं चात्वालवत्सु ६ एतत्तीर्थमित्याचक्षते ७ तस्य नित्याः प्राञ्चश्चेष्टाः ८ अङ्कधारणा च ९ यज्ञोपवीतशौचे च १० विहारादव्यावृत्तिश्च तत्र चेत् कर्म ११ एकाङ्गवचने दक्षिणं प्रतीयात् १२ अनादेशे १३ कर्मचोदनायां होतारं १४ ददातीति यजमानं १५ जुहोति-जपतीति प्रायश्चित्ते ब्रह्माणं १६ ऋचं पादग्रहणे १७ सूक्तं सूक्तादौ हीने पादे १८ अधिके तृचं सर्व्वत्र १९ जपानुमन्त्रणाप्यायनोपस्थानान्युपांशु २० मन्त्राश्च कर्म्मकरणाः २१ प्रसङ्गादपवादो बलीयान् २२ प्रपद्याभिहततरेण पादेन वेदिश्रोणयोत्तरया पार्ष्णी समां निधाय प्रपदेन बर्हिराक्रम्य संहतौ पाणी धारयन्नाकाशवत्यङ्गुली हृदयसम्मितावङ्कसम्मितौ वा द्यावापृथिव्योः सन्धि-मीक्षमाणः २३ एतद्धोतुः स्थानं २४ आसनं वा सर्वत्रैवम्भूतः २५ वचना-दन्यत् २६ प्रेषितो जपति २७ १

नमः प्रवक्त्रे नम उपद्रष्ट्रे नमोऽनुख्यात्रे क इदमनुवक्ष्यति स इदमनुवक्ष्यति षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च वाक्सम-स्थितयज्ञः साधु छन्दांसि प्रपद्येऽहमेव माममुमिति स्वन्नामादिशेत भूते भवष्यति जाते जनिष्यमाण आभजाम्यपाव्यं वाचो अशान्तिं वहेत्यङ्गल्यग्रा-ण्यवकृष्य जातवेदो रमयापशून्मयीति प्रतिसन्दध्यात् वर्म मे द्यावापृथिवी वर्माग्निर्वर्म सूर्यो वर्म मे सन्तु तिरश्चिकाः । तदद्य वाचः प्रथमं मसीयेति १ समाप्य समिधेनीरन्वाह २ हिं३ इति हिंकृत्य भूर्भुवः स्वरोमिति जपति ३ एषोऽभिहिंकारः ४ भूर्भुवः स्वरित्येव जपित्वा कौत्सो हिंकरोति ५ न च पूर्वं जपं जपति ६ अथ सामिधेन्यः प्र वो वाजा अभिद्यवोऽग्न आयाहि वीतये गृणान ईडेन्यो नमस्यस्तिरोऽग्निं दूतं वृणीमहे समिध्यमानो अध्वरे समिद्धो अग्न आहुतेति द्वे ७ ता एकश्रुति सन्ततमनुब्रूयात् ८ उदात्तानुदात्तस्वरितानां परः

सन्निकर्ष ऐकश्रुत्यं ९ स्वरादिमृगन्तमोङ्कारं त्रिमात्रं मकारान्तं कृत्वोत्तरस्य अर्द्धर्च्येऽवस्येत् तत् सन्ततं १० एतदवसानं ११ उत्तरादानमविप्रमोहे १२ समाप्तौ प्रणवेनावसानं १३ चतुर्मात्रोऽवसाने १४ तस्यान्तापत्तिः १५ स्पर्शेषु स्ववर्ग्यमुत्तमं १६ अन्तस्थासु तान्तामनुनासिकां १७रेफोष्मस्वनुस्वारं १८ त्रिः प्रथमोत्तमे अन्वाहाध्यर्धकारं १९ अध्यर्धामुक्त्वाऽवस्येदथ द्वे २० द्वे प्रथममुत्तमस्यामथाध्वर्धा २१ ताः पञ्चदशाभ्यस्ताभिः २२ एतेन शस्त्रया-ज्यानिगदानुवचनाभिष्टवनसंस्तवनानि २३ न त्वन्यत्राध्यर्धकारं । न जपः प्रागभिहिङ्कारात् । नाभिहिङ्काराभ्यासावबहुषु प्रकृत्या २४ नावछेदादौ २५ शस्त्रेष्वेव होत्रकाणामभिहिङ्कारः २६ सामिधेनीनामुत्तमेन प्रणवेनाग्ने महाँ असि ब्राह्मणभारतेति निगदेऽवसाय २७ २

यजमानस्यार्षेयान् प्रवृणीते यावन्तः स्युः १ परम्परं प्रथमं २पौरोहित्यान्राज-विशां ३ राजर्षीन् वा राज्ञां ४ सर्वेषां मानवेति संशये ५ देवेद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसंशितो घृताहवनः प्रणीर्यज्ञानां रथीरध्वराणामतूर्तो होता तूर्णिर्हव्यवाडित्यवसायास्पात्रं जुहूर्देवानाञ्चमसो देवपानोऽराँ इवाग्ने नेमिर्देवांस्त्वं परिभूरस्यावह देवान् यजमानायेति प्रतिपद्य देवता द्वितीयया विभक्त्या देशमादेशमावहेत्यावाहयेत्यादिं प्लावयन् ६ अग्न आवहेति तु प्रथमदेवतां ७ अग्निं सोममित्याज्यभागौ ८ अग्निमग्नीषोमाविति पौर्णमास्यां ९ अग्नीषोमयोः स्थान इन्द्राग्नी अमावास्यायामसन्नयतः १० इन्द्रं महेन्द्रं वा सन्नयतः ११ अन्तरेण हविषी विष्णुमुपांश्वैतरेयिणः १२ अग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामेके नैके कञ्चन १३ अन्येषामप्युपांशूनामावह स्वाहायाट् प्रिया धामानीदंहविर्महो ज्याय इत्युच्चैः १४ येऽन्ये तद्वचनाः परोक्षास्तानुपांशूच्चैर्वा १५ प्रत्यक्षमुपांशु १६ प्रतिचोदनमावाहनं १७ सर्वा आदिश्य सकृदेकप्रदानाः १८ तथोत्तरेषु निगमेष्वेकामिव संस्तुयात् १९ समानान्देवतां समानार्थां २० अव्यवहितां सकृन्निगमेषु २१ ऊल्हास्वावा-पिकासु देवाँ आज्यपाँ आवहाग्निं होत्रायावह स्वं महिमानमावहावह जातवेदः सुर्यजायजेत्यावाह्य यथास्थितमूर्ध्वजानुरुपविश्योदग्वेदेर्व्यूह्य तृणानि भूमौ प्रादेशं कुर्यात् अदितिर्मातास्यान्तरिक्षान्मा छेत्सीरिदमहमग्निना

देवेन देवतया त्रिवृता स्तोमेन रथन्तरेण साम्ना गायत्रेण छन्दसाऽग्निष्ठोमेन यज्ञेन वषट्कारेण वज्रेण योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तं हन्मीति २२ आश्रावयिष्यन्तमनुमन्त्रयेताश्रावय यज्ञन्देवेष्वाश्रावय मां मनुष्येषु कीर्त्त्यै यशसे ब्रह्मवर्चसायेति । प्रवृणानं देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेण द्यावापृथिवी मां पातामग्निर्होताऽहं मानुष इति । मानुष इत्यध्वर्योः श्रुत्वोदायुषा स्वायुषोदोषधीनां रसेनोत्पर्जन्यस्य धामभिरुदस्था-ममृताँ अन्वित्युत्तिष्ठेत् २३ षष्टिश्चाध्वर्योर्नवतिश्च पाशा अग्निँ होतारमन्तरा विवृताः । सिनन्ति पाकमतिधीर एतीत्युत्थाय २४ ऋतस्य पन्थामम्वेमि होतेत्यभिक्रम्यांसेऽध्वर्युमन्वारभेत पार्श्वस्थेन पाणिना २५ आग्नीध्रमङ्कदेशेन सव्येन वा २६ इन्द्रमन्वारभामहे होतृवूर्ये पुरोहितं । येनायन्नुत्तमं स्वर्देवा अङ्गिरसो दिवमिति २७ संमार्गतृणैस्त्रिरभ्यात्मं मुखं संमृजीत सम्मार्गोऽसि सम्मां प्रजया पशुभिर्मृड्ढीति २८ सकृन्मन्त्रेण द्विस्तूष्णीं सर्वत्रैवं कर्मावृत्तौ २९ स्पृष्ट्वोदकं होतृषदनमभिमन्त्रयेताहेदैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत् पाकतर इति ३० अङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं प्रत्यग्दक्षिणा निरसेन्निरस्तः परावसुरितीदमहमर्वा वसोः सदने सीदामीत्युपविशेद्दक्षिणोत्त-रिणोपस्थेन ३१ एते निरसनोपवेशने सर्वासनेषु सर्वेषामहरहः प्रथमो-पवेशनेऽपि समाने ३२ द्विरिति गौतमः ३३ ३

ब्रह्मौदने प्राशिष्यमाणेऽग्न्याधेये ब्रह्मा १ बहिष्पवमानात् प्रत्येत्य सोमे २ प्रसृप्य होता ३ स्रुगादापने पशौ ४ न पत्नीसांयाजिके ५ नान्यत्र होतुरिति कौत्सः ६ उपविश्य देव बर्हिः स्वासस्थं त्वाध्यासदेयमिति ७ अभिहिष होतः प्रतरां बर्हिषद्भवेति । जानशिरसा बर्हिरुपस्थृश्यात ऊर्द्ध्वं जपेत् ८ भूपतये नमो भुवनपतये नमो भूतानां पतये नमो भूतये नमः प्राणं प्रपद्येऽपानं प्रपद्ये व्यानं प्रपद्ये वाचं प्रपद्ये चक्षुः प्रपद्ये श्रोत्रं प्रपद्ये मनः प्रपद्य आत्मानं प्रपद्ये गायत्रीं प्रपद्ये त्रिष्टुभं प्रपद्ये जगतीं प्रपद्येऽनुष्टुभं प्रपद्ये छन्दांसि प्रपद्ये सूर्यो नो दिवस्पातु नमो महद्भ्यो नमो अर्भकेभ्यो विश्वे देवाः शास्तनमा यथेहाराधि होता निषदा यजीयांस्तदद्य वाचः प्रथमं मसीयेति समाप्य प्रदीप्त इध्मे स्रुचा-वादापयेन्निगदेन ९ अग्निर्होता वेत्वग्नेर्होत्रं वेतु प्रावित्रं साधु ते यजमानदेवता

यो अग्निमित्यवसाय होतारमवृथा इति जपेत् १० अथ समापयेद्घृतवती-मध्वर्योः स्रुचमास्यस्व देवयुवं विश्ववारे ईडामहै देवाँ ईडेन्यान्नमस्याम नमस्यान् यजाम यज्ञियानिति ११ समाप्तेऽस्मिन्निगदेऽध्वर्युराश्रावयति १२ प्रत्याश्रावयेदाग्नीध्रं उत्करदेशे तिष्ठन् स्फ्यमिध्मसन्नहनानीत्यादाय दक्षिणा-मुख इति शाट्यायनकमस्तुश्रौ३षडित्यौकारं प्लावयन् १३ ४

प्रयाजैश्चरन्ति १ पञ्चैते भवन्ति २ एकैकं प्रेषितो यजति ३ आगूर्याज्यादिर-नुयाजवर्जं ४ ये३ यजामह इत्यागूः । वषट्कारोऽन्त्यः सर्वत्र ५ उच्चैस्तरां बलीयान् याज्यायाः ६ तयोरादी प्लावयेत् ७ याज्यान्तञ्च ८ विविच्य सन्ध्यक्षराणामकारं न चेद्वे वचनो व्यञ्जनान्तो वा ९ विसर्जनीयोऽनत्य-क्षरोपधो रिप्यते १० इतरश्च रेफी ११ लुप्यते रेफी १२ प्रथमः स्वन्तृतीयं १३ नित्यं मकारे १४ ये३ यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तू३ वौ३षडिति वषट्कारः १५ इति प्रथमः १६ वागोजः स ह ओजो मयि प्राणापानाविति वषट्कारमुक्त्वोक्त्वाऽनुमन्त्रयते १७ दिवा कीर्त्यो वषट्कारः १८ तथानुमन्त्रणं १९ एतद्याज्यानिदर्शनं २० तनूनपादग्न आज्यस्य वेत्विति द्वितीयोऽन्यत्र वसिष्ठशुनकात्रिवध्र्यश्वराजन्येभ्यः २१ नराशंसो अग्न आज्यस्य वेत्विति तेषां २२ इडो अग्न आज्यस्य व्यन्त्विति तृतीयः २३ बर्हिरग्न आज्यस्य वेत्विति चतुर्थः । आगूर्य पञ्चमे स्वाहामुं स्वाहामुमिति यथावा-हितमनुद्रुत्य देवता यथाचोदितमनावाहिता स्वाहादेवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्त्विति २४ अतो मन्द्रेण २५ ऊर्ध्वञ्च शंयुवाकात् २६ मध्यमेन हवींष्यास्विष्टकृतः २७ उत्तमेन शेषः २८ अग्निर्वृत्राणि जङ्घनदिति पूर्वस्या-ज्यभागस्यानुवाक्या । त्वं सोमासि सत्पतिरित्युत्तरस्य । जुषाणो अग्नि-राज्यस्य वेत्विति पूर्वस्य याज्या । जुषाणः सोम आज्यस्य हविषो वेत्वि-त्युत्तरस्य । तावागूर्यादेशं यजति २९ सर्वाश्चानुवाक्यावत्योऽप्रैषा अन्या अन्वायात्याभ्यः ३० सौमिकीभ्यश्च या अन्तरेण वैश्वानरीयं पत्नीसंयाजांश्च ३१ एतौ वार्त्रघ्नौ पौर्णमास्यां ३२ अनुवाक्या लिङ्गविशेषान्नामधेयान्यत्वं । ततो विचारः ३३ नित्ये याज्ये ३४ वृधन्वन्तावमावास्यायां । अग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वयमिति । आतो वाग्यमनं ३५ अन्तरा च याज्या-

नुवाक्ये । निगदानुवचनाभिष्टवनशस्त्रजपानाञ्चारभ्यासमाप्तेः ३६ अन्यद्य-ज्ञस्य साधनात् ३७ आपद्यातो देवा अवन्तु न इति जपेत् ३८ अपि वान्यां वैष्णवीं ३९ ५

उक्ता देवतास्तासां याज्यानुवाक्या अग्निर्मूर्द्धा भुवो यज्ञस्यायमग्निः सहस्रिण इति वेदं विष्णुर्विचक्रमे त्रिर्देवः पृथिवीमेष एतामग्नीषोमा सवेदसा युवमेतानि दिवि रोचनानीन्द्राग्नी अवसा गतं गीर्भिर्विप्रः प्रमतिमिच्छमान एन्द्रसानसिं रयिं प्रससाहिषे पुरुहूत शत्रून्महाँ इन्द्रो य ओजसा भुवस्त्वमिन्द्र ब्रह्मणा महानिति यद्यग्नीषोमीय उपांशुयाजोऽग्नीषोमा यो अद्य वामान्यं दिवो मातरिश्वा जभारेति १ अथ स्विष्टकृतः पिप्रीहि देवाँ उशतो यविष्ठेत्यनुवाक्या २ ये३ यजामहेऽग्निं स्विष्टकृतमयाडग्निरित्युक्त्वा षष्ठ्या विभक्त्या देवतामादिश्य प्रिया धामान्ययाडित्युपसन्तनुयात् ३ एवमुत्तरा अयाडयाडिति त्वेव तासां पुरस्तात् ४ आज्यपान्तमनुक्रम्य देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत् स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविरग्रे यदद्य विशो अध्वरस्य होतरित्यनवानं यजति ५ प्रकृत्या वा ६ ६

प्रदेशिन्याः पर्वणी उत्तमे अञ्जयित्वौष्ठयोरभ्यात्मं निमार्ष्टि १ वाचस्पतिना ते हुतस्येषे प्राणाय प्राश्नामीत्युत्तरमुत्तरे मनसस्पतिना ते हुतस्योर्जेऽपानाय प्राश्नामीत्यधरमधरे २ स्पृष्ट्वोदकमञ्जलिनेडां प्रतिगृह्य सव्ये पाणौ कृत्वा पश्चादस्या उदगङ्गुलिं पाणिमुपधायावान्तरेडामवदापयीत ३ अन्तरेणाङ्गुष्ठ-मङ्गुलीश्च स्वयं द्वितीयमाददीत ४ प्रत्यालब्धामङ्गुष्ठेनाभिसंगृह्य प्रत्याहृत्य ५ अङ्गुलीरमुष्टिं कृत्वा दक्षिणत इडां परिगृह्यास्यसम्मितामुपह्वयते प्राण-सम्मितां वा ६ इडोपहूता सह दिवा बृहतादित्येनोपास्माँ इडा ह्वयतां सह दिवा बृहतादित्येनेडोपहूता सहान्तरिक्षेण वामदेव्येन वायुनोपास्माँ इडा ह्वयतां सहान्तरिक्षेण वामदेव्येन वायुनेडोपहूता सह पृथिव्या रथन्तरेणाग्नि-नोपास्माँ इडा ह्वयतां सह पृथिव्या रथन्तरेणाग्निनोपहूता गावः सहाशिर उप मां गावः सहाशिराह्वयन्तामुपहूता धेनुः सह ऋषभोप मां धेनुः सह ऋषभा

ह्वयतामुपहूता गौर्घृतपद्युप मां गौर्घृतपदी ह्वयतामुपहूता दिव्याः सप्त होतार उप मां दिव्याः सप्त होतारो ह्वयन्तामुपहूतः सखा भक्ष उप मां सखा भक्षो ह्वयतामुपहूतेडा वृष्टिरुप मामिडा वृष्टिर्ह्वयतामित्युपांश्वथोच्चैः इडोपहूतोपहूतेडोपास्माँ इडाह्वयतामिडोपहूता । मानवी घृतपदी मैत्रावरुणी ब्रह्मदेवकृतमुपहूतं दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः । य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानुपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे । उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूत इति ७ उपहूयावान्तरेडां प्राश्नीयादिडे भागं जुषस्व नः पिन्वंगा जिन्वार्वंतो रायस्पोषस्येशिषे तस्य नो रास्व तस्य नो दास्तस्यास्ते भागमशीमहि । सर्वात्मानः सर्वतनवः सर्ववीराः सर्वपूरुषाः सर्वपुरुषा इति वा ८ ७

मार्जयित्वानुयाजैश्चरन्ति १ परिस्तरणैरञ्जलिमन्तर्धायाप आसेचयते तन्मार्जनं २ देवादेयोऽनुयाजाः ३ वीतवत्पदान्ताः ४ त्रयः ५ एकैकं प्रेषितो यजति ६ देवं बर्हिर्वसुवने वसुधेयस्य वेतु । देवो नराशंसो वसुवने वसुधेयस्य वेतु । देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्रः कविः सत्यमन्मायजी होता होतुर्होतुरायजीयानग्ने यान् देवानयाड्याँ अपिप्रेर्ये ते होत्रे अमत्सत तां ससनुषीं होत्रां देवङ्गमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीहीत्यनवानं वा ७ ८

सूक्तवाकाय सम्प्रेषित इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि । उपश्रुती दिवस्पृथिव्योरोमन्वती तेऽस्मिन् यज्ञे यजमानद्यावापृथिवी स्तां । शङ्गयी जीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयङ्कृतौ । वृष्टिद्यावारीत्यापाशंभुवौ मयोभुवा ऊर्जस्वती पयस्वती सूपचरणा च स्वधिचरणा च तयोराविदीत्यवसाय प्रथमया विभक्त्यादिश्य देवतामिदं हविरजषतावीवृधत महो ज्यायोऽकृतेत्युपसन्तनुयात् १ एवमुत्तराः २ अक्रातामक्रतेति यथार्थं ३ उक्तमुपांशोः ४ आवापिकान्तमनुद्रुत्य देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायो-

ऽकृताग्निहोत्रेणेदं हविरजुषतावीवृधन्त महो ज्यायोऽकृत । अस्यामृधेद्धोत्रायां देवङ्गमायामाशास्तेऽयं यजमानोऽसावसावित्यस्यादिश्य नामनी उपांशु-सन्निधौ गुरोरायुराशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सजातव-नस्यामाशास्त उत्तरां देवयज्यामाशास्ते भूयो हविष्करणमाशास्ते दिव्यं धामाशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाशास्ते तदस्यां तदृध्यात् तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्योऽवनते वयमग्नेर्मानुषाः । इष्टञ्च वित्तञ्चोभे च नो द्यावापृथिवी अंहसस्यातामेह गतिर्वामस्येदं नमो देवेभ्य इति ५ ६

शंयुवाकाय सम्प्रेषितस्तच्छंयोरावृणीमह इत्याहानुवाक्यावदप्रणवां १ वेदम-स्मै प्रयच्छत्यध्वर्युः २ तं गृह्णीयाद्वेदोऽसि वेदो विदेयेति ३ उदायुषेत्येतेनो-पोत्थाय पश्चाद्गार्हपत्यस्योपविश्य सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपति-मित्याज्येन यजन्ति ४ आप्यायस्व समेतु ते सन्ते पयांसि समुयन्तु वाजा इह त्वष्टारमग्रियं तन्नस्तूरीयमधपोषयित्नु देवानां पत्नीरुशतीरवन्तु न इति द्वे अग्निर्होता गृहपतिः स राजा हव्यवाडग्निरजरः पिता न इति पत्नीसंयाजाः ५ अथ प्रजाकामो राकां सिनीवालीं कुहूमिति प्राग्गृहपतेर्यजेत ६ राकामहं सिनीवालि कुहूमहमिति द्वे द्वे याज्यानुवाक्ये ७ कुहूमहं सुवृतं विद्म नापसमस्मिन् यज्ञे सुहवां जोहवीमि । सा नो ददातु श्रवणं पितृणां तस्यैते देवि हविषा विधेम । कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु । संदाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधात्विति । आज्यं पाणितलेऽवदापयीतेडामुपहूय सर्वां प्राश्नीयात् ८ शंयुवाको भवेन्न वा ९ १०

वेदं पत्न्यै प्रदाय वाचयेद्धोताध्वर्युर्वा वेदोऽसि वित्तिरसि विदेयकर्मासि करणमसि क्रियासंसनिरसि सनितासि सनेयं घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनं । यं बहव उपजीवन्ति यो जनानामसद्वशी । तं विदेय प्रजां विदेय कामाय त्वेति १ वेदशिरसा नाभिदेशमालभेत प्रजाकामा चेत् २ अथास्यायोक्त्रं विचृतेत् प्र त्वा मुञ्चामि वरुणस्य पाशादिति ३ तत्प्रत्यग्गार्हपत्याद्द्विगुणं प्राक्पाशं निधायोपरिष्टादस्योदगग्राणि वेदतृणानि

करोति ४ पुरस्तात्पूर्णपात्रं संश्लिष्टं वेदतृणैः ५ अभिमृश्य वाचयेत् पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूया अक्षितिरसि मामेक्षोष्ठा इति ६ अथैनां पूर्णपात्रात् प्रतिदिशमुदकमुदुक्षन्नुदुक्षन्तीं वाचयति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणस्यां दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयतां मार्जयन्तामिति वा ७ अथास्या उत्तानमञ्जलिमधस्ताद्योक्त्रस्य निधायात्मनश्च सव्यं पूर्णपात्रं निनयन् वाचयेन्माहं प्रजां परासिचं या नः सयावरो स्थन । समुद्रे वो निनयानि स्वं पाथो अपोथेति ८ वेदतृणान्यग्रे गृहीत्वाऽविधून्वन्त्सन्ततं स्तृणन्त्सव्येन गार्हपत्यादाहवनीयमेति तन्तुं तन्वन् रजसो भानमन्विहीति ९ शेषं निधाय प्रत्यगुदगाहवनीयादवस्थाय स्थाल्याः स्रुवेणादाय सर्वप्रायश्चित्तानि जुहुयात् स्वाहाकारान्तैर्मन्त्रैर्न चेन्मन्त्रे पठितः १० यत्किञ्चाप्रेषितो यजेदन्यत्रापि ११ एवम्भूतोऽव्यक्तहोमाभ्याधानोपस्थानानि च १२ अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्वमया असि । अयासावयसा कृतोऽयासन् हव्यमूहिषे या नो धेहि भेषजं स्वाहा । अतो देवा अवन्तु न इति द्वाभ्यां व्याहृतिभिश्च भूः स्वाहा भवः स्वाहा स्वः स्वाहा भूर्भुवः स्वः स्वाहेति १३ हुत्वा संस्थाजपेनोपस्थाय तीर्थे निष्क्रम्यानियमः १४ ॐ च मे स्वरश्च मे यज्ञोपचते नमश्च । यत्ते न्यूनं तस्मै त उपयत्तेऽतिरिक्तं तस्मै ते नम इति संस्थाजपः १५ इति होतुः १६ ११

अथ ब्रह्मणः १ होत्राचमनयज्ञोपवीतशौचानि २ नित्यः सर्वकर्मणां दक्षिणतो ध्रुवाणां व्रजतां वा ३ बहिर्वेदि यां दिशं व्रजेयुः सैव तत्र प्राची ४ चेष्टास्वमन्त्रासु स्थानासनयोर्विकल्पः ५ तिष्ठद्धोमाश्च येऽवषट्काराः ६ आसीतान्यत्र ७ समस्तपाण्यङ्गुष्ठोऽग्रेणाहवनीयं परीत्य दक्षिणतः कुशेषूपविशेत् ८ बृहस्पतिर्ब्रह्मा ब्रह्मसदन आसिष्यते बृहस्पते यज्ञं गोपायेत्युपविश्य जपेत् ९ एष ब्रह्मजपः सर्वयज्ञतन्त्रेषु साग्नौ यत्रोपवेशनं १० उपविष्टमतिसर्जयते ११ ब्रह्मन्नपः प्रणेष्यामीति श्रुत्वा भूभुवः स्वर्बृहस्पतिप्रसूत इति जपित्वों प्रणयेत्यतिसृजेत् सर्वत्र १२ यथाकर्म त्वादेशाः १३ प्रणवाद्युच्चैः १४ ऊर्द्ध्वं

वा प्रणवात् १५ अत ऊर्ध्वं वाग्यत आस्त आहविष्कृत उद्वादनात् १६ आमार्जनात् पशौ १७ सोमे धर्मादि चातिप्रैषादि चासुब्रह्मण्यायाः १८ प्रातरनुवाकाद्यान्तर्यामात् १९ हरिवतोऽनुसवनमेडायाः २० स्तोत्रेष्वति- सर्जनाद्यावषट्कारात् २१ ओदृचः पवमानेषु २२ यच्च किञ्च मन्त्रवत् २३ होत्रा शेषः २४ आपत्तिश्च २५ यत्र त्वग्निः प्रणीयतेऽपि ससोमे तदादि तत्र वाग्यमनं २६ दक्षिणतश्च व्रजन् जपत्याशुः शिशान इति सूक्तं २७ समा- प्योपवेशनाद्युक्तं २८ न तु सौमिके प्रणयने ब्रह्मजपः २९ अन्यत्र विसृष्ट- वागबहुभाषी यज्ञमनाः ३० विपर्यासेऽन्तरिते मन्त्रे कर्मणि वाऽऽख्याते वो- पलक्ष्य वाजान् वाच्याहुतिं जुहुयात् ३१ भूरिति गार्हपत्ये । यजुष्टो भुव इति दक्षिणे । आग्नीध्रीये सोमेषु ३२ सामतः स्वरित्याहवनीये सर्वतोऽविज्ञाते वा भूर्भुवः स्वरित्याहवनीय एव ३३ प्राक् प्रयाजेभ्योऽङ्गारं बहिष्परिधि निर्वृत्तं स्रुवदण्डेनाभिनिदध्यान्मा तपो मा यज्ञस्तपन्मा यज्ञपतिस्तपत् । नमस्ते अस्त्वायते नमो रुद्र परायते । नमो यत्र निषीदसीति ३४ अमुं मा हिँसीरमुं मा हिँसीरिति च प्रतिदिशमध्वर्युयजमानौ पुरस्ताच्चेत् । ब्रह्मयजमानौ दक्षिणतः । होतृपत्नीयजमानान् पश्चात् । आग्नीध्रयजमाना उत्तरतः ३५ अथैनमनुप्रहरेदाहं यज्ञं दधे निर्ऋतेरुपस्थात्तं देवेषु परिददामि विद्वान् । सुप्रजास्त्वं शतँ हि मामदन्त इह नो देवा मयि शर्म यच्छतेति ३६ तमभिजुहुयात् सहस्रशृङ्गो वृषभो जातवेदास्तोमपृष्ठोघृतवान्त्सुप्रतीकः । मा नो हिँसीद्धिँसितो दधामि न त्वा जहामि गोपोषञ्च नो वीरपोषञ्च यच्छ स्वाहेति ३७ १२

प्राशित्रमाह्रियमाणमोक्षते मित्रस्य त्वा चक्षुषा प्रतीक्ष इति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति । तदञ्जलिना प्रतिगृह्य पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थ इति । कुशेषु प्राग्दण्डं निधायाङ्गुष्ठोपकनिष्ठिकाभ्यामसङ्खादन् प्राश्नीयात् । अग्नेष्ट्वास्येन प्राश्नामि बृहस्पतेर्मुखेनेति । आचम्यान् वाचामेत् सत्येन त्वाभिजिघर्मि या अप्स्वन्त- र्देवतास्ता इदं शमयन्तु चक्षुः श्रोत्रं प्राणान्मे मा हिँसीरितीन्द्रस्य त्वा जठरे दधामीति नाभिमालभेत । प्रक्षाल्य प्राशित्रहरणं त्रिरनेनाभ्यात्ममपो निनयते

१ मार्जयित्वास्मिन् ब्रह्मभागं निदध्यात् २ पश्चात् कुशेषु यजमानभागं ३ अन्वाहार्यमवेक्षेत प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वानक्षितिरसि मा मेक्षेष्ठा अस्मिंश्च लोकेऽमुष्मिंश्च ४ प्राणापानौ मे पाहि कामाय त्वेत्यस्पृशन्नवघ्राया-ङ्गुष्ठोपकनिष्ठिकाभ्यां शिष्टं गृहीत्वा ब्रह्मभागे निदध्यात् ५ ब्रह्मन् प्रस्थास्याम इति श्रुत्वा बृहस्पतिर्ब्रह्मा ब्रह्मसदन आसिष्ट बृहस्पते यज्ञमजूगुपः स यज्ञं पाहि यज्ञपतिं पाहि स मां पाहि ६ भूर्भुवः स्वर्बृहस्पतिप्रसूत इति जपित्वों३ प्रतिष्ठेति समिधमनुजानीयात् । संस्थिते जघन्य ऋत्विजां सर्वप्रायश्चित्तानि जुहुयात् तमितरेऽन्वालभेरन् ७ होतारं वा ८ एतयोर्नित्यहोमः ९ सर्वे संस्थाजपेनो-पतिष्ठन्त उपतिष्ठन्ते १० १३

ॐ पौर्णमासेनेष्टिपशुसोमा उपदिष्टाः १ तैरमावास्यायां पौर्णमास्यां वा यजेत २ राजन्यश्चाग्निहोत्रं जुहुयात् ३ तपस्विने ब्राह्मणायेतरं कालं भक्तमुपहरेत् ४ ऋतसत्यशीलः सोमसुत् सदा जुहुयात् ५ बहुषु बहूनामनुदेश आन-न्तर्ययोगः ६ द्वे द्वे तु याज्यानुवाक्ये ७ अदृष्टादेशे नित्ये ८ अग्न्याधेयं ९ कृत्तिकासु रोहिण्यां मृगशिरसि फल्गुनीषु विशाखयोरुत्तरयोः प्रोष्ठपदयोः १० एतेषां कस्मिंश्चित् ११ वसन्ते पर्वणि ब्राह्मण आदधीत १२ ग्रीष्मवर्षाशरत्सु क्षत्रियवैश्योपक्रुष्टाः १३ यस्मिन् कस्मिंश्चिदृतावादधीत १४ सोमेन यक्ष्य-माणो नर्तुं पृच्छेन्न नक्षत्रं १५ अश्वत्थाच्छमीगर्भादरणी आहरेदनवेक्षमाणः १६ यो अश्वत्थः शमीगर्भ आरुरोह त्वेसचा । तं त्वाहरामि ब्रह्मणा यज्ञियैः केतुभिः सहेति पूर्णाहुत्यन्तमग्न्याधेयं १७ यदि त्विष्टयस्तनुयुः १८ प्रथमायामग्निरग्निः पवमानः १९ अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः २० स हव्यवाड-मत्याऽग्निर्होता पुरोहित इति स्विष्टकृतः संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात् २१ सर्वत्र देवतागमे नित्यानामपायः २२ याः स्विष्टकृतमन्तराज्यभागौ च तास्तत्स्थाने २३ एष समानजातिधर्मः २४ द्वितीयस्यां वृधन्वन्तौ । अग्निः पावकोऽग्निः शुचिः स नः पावकदीदिवोऽग्ने पावकरोचिषाऽग्निः शुचिव्रततम उदग्ने शुचयस्तव २५ साह्वान् विश्वा अभियुजोऽग्निमीडे पुरोहितमिति संयाज्ये । तृतीयस्यां सामिधेन्यावावपते प्रागुपोत्तमायाः पृथुपाजा अमर्त्य इति द्वे २६ धाय्ये इत्युक्त एते प्रतीयात् पुष्टिमन्तावग्निना रयिमश्नवद्वयस्फानो अमीवहेति

। अग्नीषोमाविन्द्राग्नी विष्णुरिति वैकल्पिकानि २७ अदितिः २८ उत त्वामदिते महि महीमूषु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम । तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिं २९ प्रेद्धो अग्न इमो अग्न इति संयाज्ये विराजावित्युक्त एते प्रतीयादिति तिस्रः ३० आद्योत्तमे वैव स्यातां ३१ आद्या वा ३२ तथा सति तस्यामेव धाय्ये विराजौ ३३ इतिमात्रे विकारे वैराजतन्त्रेति प्रतीयात् ३४ आधानाद् द्वादशरात्रमजस्राः ३५ अत्यन्तं तु गतश्रियः ३६ १

उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वल्य दक्षिणाग्निमानीय विट्कुलाद्वित्तवतो वैकयोनय इत्येके ध्रियमाणं वा प्रज्वल्यारणिमन्तं वा मथित्वा गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत् १ देवं त्वा देवेभ्यः श्रिया उद्धरामीत्युद्धरेत् २ उद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान् यच्च विद्वांश्चकार । अह्ना यदेनः कृतमस्ति किञ्चित् सर्वस्मान्मोद्धृतः पाहि तस्मादिति प्रणयेत् ३ अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य योनौ । तयानन्तं काममहं जयानि प्रजापतिः प्रथमोऽयं जिगायाग्नावग्निः स्वाहेति निदध्यादादित्यमभिमुखः ४ एवं प्रातर्व्युष्टायान्तमेवाभिमुखः ५ रात्र्या यदन इति तु प्रणयेत् ६ अत ऊर्द्ध्वमाहिताग्निर्व्रतचार्याहोमात् ७ अनुदितहोमी चोदयात् ८ अस्तमिते होमः ९ नित्यमाचमनं १० ऋतसत्याभ्यां त्वा पर्युक्षामीति जपित्वा पर्युक्षेत् त्रिस्त्रिरेकैकं पुनः पुनरुदकमादाय ११ आनन्तर्ये विकल्पः १२ दक्षिणं त्वेव प्रथमं विज्ञायते पिता वा एषोऽग्नीनां यद्दक्षिणः पुत्रो गार्हपत्यः पौत्र आहवनीयस्तस्मादेवं पर्युक्षेत् १३ गार्हपत्यादविच्छिन्नामुदकधारां हरेत् तन्तु तन्वन् रजसो भानुमन् विहीत्याहवनीयात् १४ पश्चाद्गार्हपत्यस्योपविश्योदङङ्गारानपोहेत् सुहुतकृतः स्थ सुहुतं करिष्यथेति १५ तेष्वग्निहोत्रमधिश्रयेदधिश्रितमध्यधिश्रितमधिश्रितं हिं३ इति १६ इडायास्पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व । ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि पुष्टिरस्त्विति वा १७ न दध्यधिश्रयेदधिश्रयेदित्येके १८ २

पयसा नित्यहोमः १ यवागूरोदनो दधि समिग्रामकामान्नाद्यकामेन्द्रियकाम-

तेजस्कामानां २ अधिश्रितमवज्वलयेत् ३ अनधिश्रयं दध्यग्निष्टे तेजो माहार्षीरिति ४ स्रुवेण प्रतिषिञ्चयान्न वा शान्तिरस्यमृतमसीति ५ तयो-रव्यतिचारः ६ पुनर्ज्वलता परिहरेत् त्रिरन्तरितं रक्षोऽन्तरिता अरातय इति ७ समुदन्तं कर्षन्निवोदङ्ङुद्वासयेद्दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति निदधत् ८ सुहुतकृतः स्थ सुहुतमकार्ष्टेत्यङ्गारानतिसृज्य स्रुक्स्रुवं प्रतितपेत् प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातय इति ९ उत्तरतः स्थाल्याः स्रुवमासाद्योमुन्नयानीत्यतिसर्जयीत १० आहिताग्निराचम्यापरेण वेदिमति-व्रज्य दक्षिणत उपविश्यैतच्छ्रुत्वोमुन्नयेत्यतिसृजेत् ११ अतिसृष्टो भूरिडा भुव इडा स्वरिडा वृध इडेति स्रुवपूरमुन्नयेत् १२ अग्नियमग्नियं पूर्णतमं योऽनु ज्येष्ठमृद्धिमिच्छेत् पुत्राणां १३ योऽस्य पुत्रः प्रियः स्यात् तं प्रति पूर्णमुन्नयेत् १४ स्थालीमभिमृश्य समिधं स्रुचं चाध्यधि गार्हपत्यं हृत्वा प्राणसम्मि-तामाहवनीयसमीपे कुशेषूपसाद्य जान्वाच्य समिधमादध्याद्रजतां त्वाग्नि-ज्योतिषं रात्रिमिष्टकामुपदधे स्वाहेति १५ समिधमाधाय विद्युदसि विद्य मे पाप्मानमग्नौ श्रद्धेत्यप उपस्पृश्य प्रदीप्तां द्व्यङ्गुलमात्रेऽभिजुहुयाद्भूर्भुवः स्वरो३मग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति १६ पूर्वामाहुतिं हुत्वा कुशेषु साद-यित्वा गार्हपत्यमवेक्षेत पशून्मे यच्छेति १७ अथोत्तरां तूष्णीं भूयसीमसंसृष्टां प्रागुदगुत्तरतो वा १८ प्रजापतिं मनसा ध्यायात् तूष्णीं होमेषु सर्वत्र १९ भूयिष्ठं स्रुचि शिष्ट्वा त्रिरनुप्रकम्प्यावमृज्य कुशमूलेषु निमार्ष्टि पशुभ्यस्त्वेति २० तेषां दक्षिणत उत्ताना अङ्गुलीः करोति प्राचीनावीती तूष्णीं स्वधा पितृभ्य इति वा २१ अपोऽवनिनीय २२ वृष्टिरसि वृश्च मे पाप्मानमप्सु श्रद्धेत्यप उपस्पृश्य २३ आहिताग्निरनुमन्त्रयेत २४ आधानमुक्त्वा तेन ऋषिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद्ध्रुवासीदेति समिधं २५ ता अस्य सूद दोहस इति पूर्वामाहुतिं २६ उपोत्थायोत्तरां कांक्षेतेक्षमाणो भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्यां सुवीरो वीरैः सुपोषः पोषैः २७ आग्नेयीभिश्च २८ अग्न आयूंषि पवस इति तिसृभिः २९ ३

संवत्सरे संवत्सरे १ यवाग्वा पयसा वा स्वयं पर्वणि जुहुयात् २ ऋत्विजामेक इतरं कालं ३ अन्तेवासी वा ४ स्पृष्ट्वोदकमुदङावृत्य भक्षयेत्

५ अपरयोर्वा हुत्वा ६ आयुषे त्वा प्राश्नामीति प्रथमं । अन्नाद्याय त्वेत्युत्तरं ७ तूष्णीं समिधमाधायाग्नये गृहपतये स्वाहेति गार्हपत्ये ८ नित्योत्तरा ९ तूष्णीं समिधमाधायाग्नये संवेशपतये स्वाहेति दक्षिणे । अग्नयेऽन्नादायान्नपतये स्वाहेति वा १० नित्योत्तरा ११ भक्षयित्वाभ्यात्ममपः स्रुचा निनयते त्रिः सर्वदेवजनेभ्यः स्वाहेति १२ अथैनां कुशैः प्रक्षाल्य चतस्रः पूर्णाः प्रागुदीच्योर्निनयेदृतुभ्यः स्वाहा दिग्भ्यः स्वाहा सप्तर्षिभ्यः स्वाहेतरजनेभ्यः स्वाहेति १३ पञ्चमीं कुशदेशे पृथिव्याममृतं जुहोम्यग्नये वैश्वानराय स्वाहेति । षष्ठीं पश्चाद्गार्हपत्यस्य प्राणममृते जुहोम्यमृतं प्राणे जुहोमि स्वाहेति १४ प्रताप्यान्तर्वेदि निदध्यात् १५ परिकर्मिणे वा प्रयच्छेत् १६ अग्रेणाहवनीयं परीत्य समिध आदध्यात् तिस्रस्तिस्र उदङ्मुखस्तिष्ठन् १७ प्रथमां समन्त्रां १८ आहवनीये दीदिहीति गार्हपत्ये दीदायेति दक्षिणे दीदिदायेति १९ उक्तं पर्युक्षणं २० ताभ्यां परिसमूहने २१ पूर्वे तु पर्युक्षणात् २२ एवं प्रातः २३ उपोदयं व्युषित उदिते वा २४ सत्यऋताभ्यां त्वेति पर्युक्षणमोमुन्नेष्यामीत्यतिसर्जनं हरिणीं त्वा सूर्यज्योतिषमहरिष्टकामुपदधे स्वाहेति समिदाधानं भूर्भुवः स्वरों सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति होम उन्मार्जनञ्च २५ ४

प्रवत्स्यन्नग्नीन् प्रज्वल्याचम्यातिक्रम्योपतिष्ठते १ आहवनीयं शंस्य पशून्मे पाहीति । गार्हपत्यं नय प्रजां मे पाहीति । दक्षिणमथर्वपितुं मे पाहीति । गार्हपत्याहवनीयावीक्षेतेमान् मे मित्रावरुणौ गृहान् गोपायतं युवं अविनष्टानविहृतान् पूषैनानभिरक्षत्वास्माकं पुनरायनादिति २ यथेतं प्रत्येत्य प्रदक्षिणं पर्यन्नाहवनीयमुपतिष्ठते । मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्ने । तत्त्वं बिभृहि पुनराममैतोस्तवाहं नाम बिभराण्यग्न इति ३ प्रव्रजेदनवेक्षमाणो मा प्रणमेति सूक्तं जपन् ४ आरादग्निभ्यो वाचं विसृजेत ५ सदा सुगः पितुर्मा अस्तु पन्था इति पन्थानमवरुह्य ६ अनपस्थिताग्निश्चेत् प्रवासमापद्येत । इहैव सन् तत्र सन्तं त्वाग्ने हृदा वाचा मनसा वा बिभर्मि । तिरो मा सन्तं मा प्रहासीर्ज्योतिषा त्वा वैश्वानरेणोपतिष्ठत इति प्रतिदिशमग्नीनुपस्थाय ७ अपि पन्थामगन्महीति प्रत्येत्य ८ समित्पाणिर्वाग्यतोऽग्नीन् ज्वलतः श्रुत्वाऽभिक्रम्याहवनीयमीक्षेत । विश्वदानीमाभरन्तोऽनातुरेण मनसा

। अग्ने मा ते प्रतिवेशारिषाम । नमस्ते अस्तु मीढुषे नमस्त उपसद्वने । अग्ने शुम्भस्व तन्वः सम्मारय्यासृजेति ९ अग्निषु समिध उपनिधायाहवनीयमुपतिष्ठते । मम नाम तव च जातवेदो वाससी इव विवसानौ चरावः । ते बिभृवो दक्षसे जीवसे च यथायथं नौ तन्वा जातवेद इति १० ततः समिधोऽभ्यादध्यात् ११ आहवनीयेऽगन्म विश्ववेदसमस्मभ्यं वसुवित्तमं । अग्ने सम्राडभिद्युम्नमभिसह आयच्छस्व स्वाहेति । गार्हपत्येऽयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः । अग्ने गृहपतेऽभिद्युम्नमभिसह आयच्छस्व स्वाहेति । दक्षिणेऽयमग्निः पुरीष्यो रयिमान् पुष्टिवर्धनः । अग्ने पुरीष्याभिद्युम्नमभिसह आयच्छस्व स्वाहेति । गार्हपत्याहवनीयावीक्षेतेमान्मे मित्रावरुणौ गृहानजूगुपतं युवं । अविनष्टानविहृतान् पूषैनानभ्यराक्षीदास्माकं पुनरायनादिति १२ यथेतं प्रत्येत्य । परिसमूह्योदग्विहारादुपविश्य भूर्भुवः स्वरिति वाचं विसृजेत १३ प्रोष्य भूयो दशरात्राच्चतुर्गृहीतमाज्यं जुहुयात् मनोज्योतिर्जुषतामाज्यं मे विच्छिन्नं यज्ञं समिमं दधातु । या इष्टा उषसो या अनिष्टास्ताः सन्तनोमि हविषा घृतेन स्वाहेति १४ अग्निहोत्राहोमे च १५ प्रतिहोममेके १६ गृहानीक्षेताप्यनाहिताग्निर्गृहा मा बिभीतोपमः स्वस्त्ये वोऽस्मासु च प्रजायध्वं मा च वो गोपतीरिषदिति प्रपद्येत । गृहानहं सुमनसः प्रपद्ये वीरघ्नो वीरवतः सुवीरान् । इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशातीति शिवं शम्मं शंयोः शंयोरिति त्रिरनुवीक्षमाणाः १७ विदितमप्यलीकं न तदहर्ज्ञापयेयुः १८ विज्ञायतेऽभयं वोऽभयं मेऽस्त्वित्येवोपतिष्ठेत प्रवसन् प्रत्ये त्याहरहर्वेति १९ ५

अमावास्यायामपराह्णे पिण्डपितृयज्ञः १ दक्षिणाग्नेरेकोल्मुकं प्राग्दक्षिणा प्रणयेत् ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्ठाल्लोकात् प्रणुदात्वस्मादिति २ सर्वकर्माणि तां दिशं ३ उपसमाधायोभौ परिस्तीर्य दक्षिणाग्नेः प्रागुदक् प्रत्यगुदग्वैकैकशः पात्राणि सादयेच्चरुस्थालिशूर्पस्फ्योलूखलमुसलस्रुवध्रुवकृष्णाजिनसकृदाच्छिन्नेध्ममेक्षणकमण्डलून् ४ दक्षिणतोऽग्निष्ठमारुह्य चरुस्थालीं व्रीहीणां पूर्णां निमृजेत् ५ परिशन्नान् निदध्यात् ६ कृष्णाजिन उलूखलं कृत्वेतरान् पत्न्यवहन्या-

दविवेचं ७ अवहतान्त्सकृत् प्रक्षाल्य दक्षिणाग्नौ श्रपयेत् ८ अर्वागतिप्रणीतात् स्फ्येन लेखामुल्लिखेदपहता असुरा रक्षांसि वेदिषद इति ९ तामभ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्य आसादयेदभिघार्य स्थालीपाकमाज्यं सर्पिरनुत्पूतं नवनीतं वोत्पूतं ध्रुवायामाज्यं कृत्वा दक्षिणतः १० आञ्जनाभ्यञ्जन-कशिपूपबर्हणानि ११ प्राचीनावीतीध्ममुपसमाधाय मेक्षणेनादायावदान-सम्पदा जुहुयात् सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति १२ स्वाहाकारेण वाग्निं पूर्वं यज्ञोपवीती १३ मेक्षणमनुप्रहृत्य प्राचीनावीती लेखां त्रिरुदकेनोपनयेच्छुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति १४ तस्यां पिण्डान् निपृणीयात् पराचीनपाणिः पित्रे पितामहाय प्रपितामहायैतत् तेऽसौ ये च त्वामत्रान्विति १५ तस्मै तस्मै य एषां प्रेताः स्युरिति गाणगारिः प्रत्यक्षमितरानर्चयेत् तदर्थत्वात् १६ सर्वेभ्य एव निपृणीयादिति तौल्वलिः क्रियागुणत्वात् १७ अपि जीवान्त आत्रिभ्यः प्रेतेभ्य एव निपृणीयादिति गौतमः क्रिया ह्यर्थकारिता १८ उपायविशेषो जीवमृतानां १९ न परेभ्योऽनधिकारात् । न प्रत्यक्षं । न जीवेभ्यो निपृणीयात् २० न जीवान्तर्हितेभ्यः २१ जुहुयाज्जीवेभ्यः २२ सर्वहुतं सर्वजीविनः २३ नामान्यविद्वांस्ततपितामहप्रपितामहेति २४ ६

निपृताननुमन्त्रयेतात्र पितरो मादयध्वं यथाभागमावृषायध्वमिति १ सव्यावृदुदङ्ङावृत्य यथाशक्त्यप्राणन्नासि त्वाऽभिपर्यावृत्त्यामीमदन्त पितरो यथाभागमावृषायीषतेति २ चरोः प्राणभक्षं भक्षयेत् ३ नित्यं निनयनं ४ असावभ्यंक्ष्वासावंक्ष्वेति पिण्डेष्वभ्यञ्जनाञ्जने ५ वासो दद्याद्दशामूर्णास्तुका वा पञ्चाशद्वर्षताया ऊर्द्ध्वं स्वंलोमैतद्वः पितरो वासो मा नोऽतोऽन्यत् पितरो युंग्ध्वमिति ६ अथैनानुपतिष्ठेत नमो वः पितर इषे नमो वः पितर ऊर्जे नमो वः पितरः शुष्माय नमो वः पितरोऽघोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय । स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितर इमा अस्माकं जीवा वो जीवन्त इह सन्तः स्याम ७ नमोऽन्वाहुवामह इति च तिसृभिः ८ अथैनान् प्रवाहयेत् परेतन पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः । दत्तायास्मभ्यं द्रविणे ह भद्रं रयिञ्च नः सर्ववीरं नियच्छतेति ९

अग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैरिति १० गार्हपत्यं यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जहिंसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु करोतु मामनेनसमिति ११ वीरं मे दत्त पितर इति पिण्डानां मध्यमं १२ पत्नीं प्राशयेदाधत्त पितरो गर्भं कुमारं पुष्करस्रजं । यथायमरपा असदिति १३ अप्स्वितरौ १४ अतिप्रणीते वा १५ यस्य वागन्तुरन्नकाम्याभावः स प्राश्नीयात् १६ महारोगेण वाभितप्तः प्राश्नीयादन्यतरां गतिं गच्छति १७ एवमनाहिताग्निर्नित्ये १८ श्रपयित्वातिप्रणीय जुहुयात् १९ द्विवत् पात्राणामुत्सर्गः २० तृणं द्वितीयमुद्रिक्ते २१ ७

दर्शपूर्णमासावारस्फ्यमानोऽन्वारम्भणीयां १ अग्नाविष्णू सरस्वती सरस्वानग्निर्भगी २ अग्नाविष्णू सजोषसे मा वर्द्धन्तु वाङ्गिरः । द्युम्नैर्वाजेभिरागतं । अग्नाविष्णू महि धामप्रियं वां वीथो घृतस्य गुह्या जुषाणा । दमे दमे सुष्टुतिर्वामियाना प्रति वां जिह्वा घृतमुच्चरण्यत् । पावकानः सरस्वती पावीरवी कन्या चित्रायुः पीपिवांसं सरस्वतो दिव्यं सुपर्णं वायसं बृहन्तमासवं सवितुर्यथा स नो राधांस्याभरेति ३ आधानाद्यद्यामयावी यदि वार्था व्यथेरन् पुनराधेय इष्टिः ४ तस्यां प्रयाजानूयाजान् विभक्तिभिर्यजेत् ५ समिधः समिधोऽग्नेऽग्न आज्यस्य व्यन्तु । तनूनपादग्निमग्न आज्यस्य वेतु । इडो अग्निनाग्न आज्यस्य व्यन्तु । बर्हिरग्निरग्न आज्यस्य वेत्विति ६ समिधाग्निं दुवस्पते ह्यूषु ब्रवाणि त इत्याग्नेयावाज्यभागौ ७ बुद्धिमदिन्दुमन्तावित्याचक्षते ८ तथानुवृत्तिः ९ इज्या च १० नित्यं पूर्वमनुब्राह्मणिनः ११ अग्न आयूँषि पवस इत्युत्तरं १२ नित्यस्तूत्तरे हविःशब्दः १३ आग्नेयं हविः । अधाह्यग्ने क्रतोर्भद्रस्याभिष्टे अद्य गीर्भिर्गृणन्त एभिर्नो अर्कैरग्ने तमद्याश्वं न स्तामैरिति संयाज्ये । देवं बर्हिरग्नेर्वसुवने वसुधेयस्य वेतु देवो नराशंसोऽग्नौ वसुवने वसुधेयस्य वेत्विति १४ ८

आग्रयणं व्रीहिश्यामाकयवानां १ सस्यं नाश्नीयादग्निहोत्रमहुत्वा २ यदा वर्षस्य तृप्तः स्यादथाग्रयणेन यजेत ३ अपि हि देवा आहुस्तृप्तो नूनं वर्षस्याग्रयणेन हि यजत इति अग्निहोत्रीं वै नानादयित्वा तस्याः पयसा

जुहुयात् ४ अपि वा क्रिया यवेषु ५ इष्टिस्तु राज्ञः ६ सर्वेषां चैके ७ श्यामाकेष्ट्यां सौम्यश्चरुः ८ सोम यास्ते मयोभुवो या ते धामानि दिवि या पृथिव्यामित्यवान्तरेडाया नित्यं जपमुक्त्वा सव्ये पाणौ कृत्वेतरेणाभिमृशेत् प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रिये मह्यं यशसे मह्यमन्नाद्याय ९ भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहि त्वा । स नो मयोभूः पितवाविशे ह शन्नो भव द्विपदे शं चतुष्पद इति प्राश्याचम्य नाभिमालभेतामोऽसि प्राण तदृतं ब्रवीम्यमासि सर्वानसि प्रविष्टः । स मे जरां रोगमपनुद्य शरीरादमा म एधि मामृधाम इन्द्रेति १० एतेन भक्षिणो भक्षान् सर्वत्र नवभोजने ११ अथ व्रीहियवानां धाय्ये विराजौ १२ अग्नीन्द्राविन्द्राग्नी वा विश्वेदेवाः सोमो यदि तत्र श्यामाको द्यावापृथिवी १३ आद्या ये अग्निमिन्धते सुकर्माणः सुरुचो देवयन्तो विश्वेदेवास आगत ये के च ज्मामहि नो अहिमाया मही द्यौः पृथिवी च नः प्रपूर्वजे पितरानव्यसीभिरिति १४ ९

अथ काम्याः १ आयुष्कामेष्ट्यां जीवातुमन्तौ २ आ नो अग्ने सुचेतुना त्वं सोम महे भगमित्यग्निरायुष्मानिन्द्रस्त्राता ३ आयुष्टे विश्वतो दधदयम-ग्निर्वरेण्यः । पुनस्ते प्राण आयातु परा यक्ष्मं सुवामि ते । आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमं । त्रातारमिन्द्रमवितारमिन्द्रं मा ते अस्यां सहसावन् परिष्टौ । पाहि नो अग्ने पायुभिरजस्रैरग्ने त्वं पारयानव्यो अस्मानिति संयाज्ये ४ स्वस्त्ययन्यां रक्षितवन्तौ ५ अग्ने रक्षा णो अँहसस्त्वं नः सोम विश्वत इति ६ अग्निः स्वस्तिमान्त्स्वस्ति नो दिवो अग्ने पृथिव्या आरे अस्मदमतिमारे अँह इति पूर्वयोक्ते संयाज्ये ७ पुत्रकामेष्ट्यामग्निः पुत्री ८ यस्मै त्वं सुकृते जात-वेदो यस्त्वा हृदा कीरिणा मन्यमानः । अग्निस्तु विश्रवस्तममिति द्वे संयाज्ये ९ आग्नेय्या उत्तरे १० नित्ये मूर्द्धन्वतः ११ तुभ्यं ता अङ्गिरस्तमाश्यामन्तं काममग्ने तवोतीति कामाय १२ वैमृध्या उत्तरे १३ वि न इन्द्र मृधो जहि मृगो न भीमः कुचरो गिरिष्ठाः । सद्युत्तिमिन्द्र सच्युतिं प्रच्युतिं जघनच्युतिं । प्रनाकाफान आभर प्रयप्स्यन्निव सक्थ्यौ वि न इन्द्र मृधो जहि । चनीखुदद्यथासपमभि नः सुष्टुतिं नयेति १४ इन्द्राय दात्रे पुनर्दात्रे वा १५

यानि नो धनानि क्रुद्धो जिनासि मन्युना । इन्द्रानुविद्धि नस्तानि अनेन हविषा पुनः । पुनर्न इन्द्रो मघवा ददातु धनानि शक्रो धनीः सुराधाः । अस्मद्र्यक् कृणुतां याचितो मनः श्रुष्टी न इन्द्रो हविषा मृधातीति १६ आशानामाशा-पालेभ्यो वा १७ आशानामाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः । इदम्भूतस्याध्य-क्षेभ्यो विधेम हविषा वयं । विश्वा आशा मधुना संसृजामि अनमी वा आप ओषधयः सन्तु सर्वाः । अयं यजमानो मृधो व्यस्यत्वगृभीताः पशवः सन्तु सर्व इति १८ लोकेष्टिः १९ पृथिव्यन्तरिक्षं द्यौरिति देवताः २० पृथिवीं मातरं महीमन्तरिक्षमुपब्रुवे । बृहतीमूतये दिवं । विश्वं बिभर्त्ति पृथिवी अन्तरिक्षं विपप्रथे । दुहे द्यौर्बृहती पयः । वर्म मे पृथिवी मही अन्तरिक्षं स्वस्तये । द्यौर्मे शर्म महि श्रव इति तिस्रस्त्रयाणां २१ प्रथमे प्रथमस्योत्तमे मध्यमस्य २२ १०

मित्रविन्दा महावैराजी १ अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता पूषा सरस्वती त्वष्टेत्येकप्रदानाः २ अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता यः सहस्री । पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपेण समनक्तु यज्ञं ३ प्रतिलोममादिश्य यजद् ये यजामहे त्वष्टारं सरस्वतीं पूषणं सवितारं बृहस्पतिमिन्द्रं मित्रं वरुणं सोममग्निं त्वष्टा रूपाणि दधती सरस्वती भगं पूषा सविता नो ददातु । बृहस्पतिर्ददिन्द्रः सहस्रं मित्रो दाता वरुणः सोमो अग्निरिति ४ अष्टौ वैराजतन्त्राः ५ तासामाद्याः षडेकहविषः ६ स्नुषा-श्वशुरीययाभिचरन् यजेत ७ इन्द्रः सूरो अतरद्रजांसि स्नुषा सपत्ना श्वशुरी-ऽहमस्मि । अहं शत्रून् जयामि जर्हृषाणोऽहं वाजं जयामि वाजसातौ ॥ इन्द्रः सूरः प्रथमो विश्वकर्मा मरुत्वाँ अस्तुगणवान् सुजातैः । मम स्नुषा श्वशुरस्य प्रविष्टौ सपत्ना वाचं मनस उपासतां ॥ ८ जुष्टोदमूना अग्ने शर्द्ध महते सौभगायेति संयाज्ये ९ विमतानां सम्मत्यर्थे संज्ञानी १० अग्निर्वसुमान् सोमो रुद्रवानिन्द्रो मरुत्वान्वरुण आदित्यवानित्येकप्रदानाः ११
अग्निः प्रथमो वसुभिर्नो अव्यात् सोमो रुद्रैरभिरक्षतु त्मना ।
इन्द्रो मरुद्भिर्ऋतुथा कृणोतु आदित्यैर्नो वरुणः शर्म यंसत् ॥
समग्निर्वसुभिर्नो अव्यात् सं सोमो रुद्रियाभिस्तनूभिः ।

समिन्द्रो रातहव्यो मरुद्भिः समादित्यैर्वरुणो विश्ववेदा इति १२
ऐन्द्रामारुतीं भेदकामाः १३ मरुतो यस्य हि क्षये प्रशर्द्धाय मारुताय स्वभानव इति १४ ऐन्द्रीमनूच्य मारुत्या यजेन्मारुतीमनूच्यैन्द्र्या यजेदिन्द्रं पूर्वं निगमेषु मरुतो वा १५ इन्द्रं वा । प्रधानादूर्द्ध्वं मरुतः १६ प्रकृत्या सम्पत्तिकामाः संज्ञानीञ्च १७ ऐन्द्राबार्हस्पत्यां प्रधृष्यमाणाः १८ आ न इन्द्राबृहस्पती अस्मै इन्द्राबृहस्पती इति यद्यपीन्द्राय चोदयेयुः १९ ११

पवित्रेष्ट्यां १ १२

वर्षकामेष्टिः कारीरी १ तस्यां प्रति त्यं चारुमध्वरमीडे अग्निं स्ववसं नमोभि-रिति धाय्ये २ याः काश्च वर्षकामेष्ट्याऽप्सुमन्तौ ३ अप्स्वग्ने सधिष्टवाप्सु मे सोमो अब्रवीदिति ४ अग्निर्धामच्छन्मरुतः सूर्यः ५ तिस्रश्च पिण्ड्य उत्तराः ६ हिरण्यकेशो रजसो विसार इति द्वे त्वन्त्याचिदच्युता धामन्ते विश्वं भुवनमधिश्रितमिति वावाश्रेव विद्युन्मिमाति पर्वतश्चिन्महि वृद्धो बिभाय सृजन्ति रश्मिमोजसा वहिष्ठेभिर्विहरन् यासि तन्तुमुदीरयथा मरुतः समुद्रतः प्र वो मरुतस्तविषा उदन्यव आयं नरः सुदानवो ददाशुषे विद्युन्महसो नरो अश्मदिद्यवः कृष्णं नियानं हरयः सुपर्णा नियुत्वन्तो ग्रामजितो यथा नरः ७ अग्ने बाधस्व विमृधो विदुर्ग्रहा यं त्वा देवापिः शुशुचानो अग्न इति संयाज्ये । ऋचोऽनूच्य यजुर्भिरेके यजन्ति ८ संस्थितायां सर्वा दिश उपतिष्ठेताच्छा-वदतवसं गीर्भिराभिरिति चतसृभिः प्रत्यृचं सूक्तेन सूक्तेन वा ९ १३

अत ऊर्ध्वमिष्ट्ययनानि १ सांवत्सरिकाणि २ तेषां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रयोगः ३ तुरायणं ४ अग्निरिन्द्रो विश्वेदेवा इति पृथगिष्टयो-ऽनुसवनमहरहः ५ एका वा त्रिहविः ६ दाक्षानण्यज्ञे द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत ७ नित्ये पूर्वे यथाऽसन्नयतोऽमावास्यायां ८ उत्तरयोरैन्द्रं पौर्णमास्यां द्वितीयं ९ मैत्रावरुणममावास्यायां १० आ नो मित्रावरुणा यद्वं-हिष्ठं नातिविधे सुदानू इति प्राजापत्य इडादधः ११ प्रजापते न त्वदेतान्यन्य-स्तवेमे लोकाः प्रदिशो दिशश्च परावतो निवत उद्वतश्च । प्रजापते विश्वसृज्जीव

धन्य इदं नो देव प्रतिहर्य हव्यमिति द्यावापृथिव्योरयनं १२ पौर्णमासेना- मावास्यादामावास्येनापौर्णमासात् १३ असमाम्नातास्वर्थात् तन्त्रविकारः १४ अध्वर्युर्वा यथा स्मरेत् १५ वैराजन्त्वग्निमन्थने १६ धाय्ये त्वेवैके देवत- लक्षणा याज्यानुवाक्याः १८ गायत्र्यावती हूतवत्युपोक्तवती पुरस्ता- ल्लक्षणानुवाक्या १९ त्रिष्टुब्वती वीतवती जुष्टवत्यपरिष्टाल्लक्षणा याज्या । अपि वान्यस्य छन्दसः २० न तु याज्या ह्रसीयसी २१ नोष्णिङ्बृहती २२ क्षामनष्टहतदग्धवतीस्तु वर्जयेत् २३ व्यक्ते तु दैवते तथैव २४ लक्षणमपि वाऽव्यक्ते २५ अनधिगच्छन् सर्वशः २६ अनधिगम आग्नेयीभ्यां २७ व्या- हृतिभिर्वा २८ देवतामादिश्य प्रणुयाद्यजेच्च २९ नाम्नाभ्यां वा ३० इम- माशृणुधी हवं यन्त्वागीर्भिर्हवामहे । एदं बर्हिर्निषीद नः । स्तीर्णं बर्हिरा- नुषगासदेतदुपेडाना इह नो अद्य गछ । अहेडता मनसेदं जषस्व वीहि हव्यं प्रयतमाहुतम्म इति नम्रे ३१ आग्नेय्यावनिरुक्ते ३२ १४

चातुर्मास्यानि प्रयोक्ष्यमाणः पूर्वेद्युर्वैश्वानरपार्जन्यां १ वैश्वानरो अजीजनदग्निर्नो नव्यसीम्मतिं । क्षमया वृधान ओजसा । पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पर्जन्याय प्रगायत प्रवाता वान्ति पतयन्ति विद्युत इत्यग्न्याधेयप्रभृत्यन्ता उपांशुहविषः २ सौमिक्यः ३ प्रायश्चित्तिक्यः ४ अन्वायात्यैककपालाः ५ सर्वत्र वारुणवर्जं ६ सावित्रश्चातुर्मास्येषु ७ प्रधानहवींषि चैके ८ पित्र्योपसदः सतन्त्राः ९पौनराधेयिकी च प्रागुत्तमादनुयाजात् १० अपि वा सुमन्द्रतन्त्राः ११ आगुःप्रणववषट्कारा उच्चैः सर्वत्र १२ तथाऽऽग्रयणेऽग्नियं १३ आहार्यस्तु प्राणसन्ततः प्रणवः पुरोऽनुवाक्यायाः १४ तथागुर्वषट्कारौ याज्यायाः १५ तन्त्रस्वराण्युपांशोरुच्चानि १६ मन्द्राण्यु-पांशुतन्त्राणां १७ १५

प्रातर्वैश्वदेव्यां प्रेषितोऽग्निमन्थनीया अन्वाह पश्चात् सामिधेनीस्थानस्य पद- मात्रेऽवस्थायाभिहिङ्कृत्य १ अभि त्वा देव सवितर्मही द्यौः पृथिवी च नस्त्वामग्ने पुष्करादधीति तिसृणामर्द्धर्चं शिष्ट्वाऽऽरमेदासंप्रैषात् २ अन्यत्राप्यन्त ऋचो-ऽवसाने जायमाने त्वेतस्मिन्नेवावसाने ३ अग्ने

हंसीत्यत्रिणमिति सूक्तमावपेत पुनः पुनराजन्मनः ४ जातं श्रुत्वानन्तरेण प्रणवेन शिष्टमुपसन्तनुयात् ५ शिष्टेनोत्तराम् ६ उत ब्रुवन्तु जन्तव आयं हस्तेन खादिनमित्यर्धर्च आरमेत् । प्र देवं देव वीतय इति द्वे अग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निना तमर्जयन्त सुक्रतुं यज्ञेन यज्ञमयजन्त देवा इति परिदध्यात् ७ सर्वत्रोत्तमां परिधानीयेति विद्यात् ८ धाय्ये विराजौ नव प्रयाजाः प्रागुत्तमाच्चतुर आवपेत दुरो अग्न आज्यस्य व्यन्तूषासा नक्ताग्न आज्यस्य वीतां दैव्या होताराऽग्न आज्यस्य वीतां तिस्रो देवीरग्न आज्यस्य व्यन्त्विति ९ अग्निः सोमः सविता सरस्वती पूषा मरुतः स्वतवसो विश्वेदेवा द्यावापृथिवी १० आ विश्वदेवं सत्पतिं वाममद्य सवितर्वाममुश्वः पूषन् तव व्रते वयं शुक्रन्ते अन्यद्यजतं ते अन्यदिहेहवः स्वतवसः प्रचित्रमर्कं गृणते तुरायेति ११ नवानूयाजाः षडूर्द्ध्वं प्रथमाद्देवी द्वारो वसुवने वसुधेयस्य व्यन्तु । देवी उषासा नक्ता वसुवने वसुधेयस्य वीतां । देवी जोष्ट्री वसुवने वसुधेयस्य वीतां । देवी ऊर्जाहुती वसुवने वसुधेयस्य वीतां । देवा दैव्या होतारा वसुवने वसुधेयस्य वीतां । देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधेयस्य व्यन्त्विति १२ अनूयाजानां सूक्तवाकस्य शंयुवाकस्य वोपरिष्टाद्वाजिभ्यो वाजिनमनावाह्यादेशं १३ शन्नो भवन्तु वाजिनो हवेषु वाजे वाजेऽवत वाजिनो न इत्यूर्ध्वजुरनवानं याज्यां १४ अग्ने वीहीत्यनुवषट्कारौ वाजिनस्याग्ने वीहीति वा । यत्र क्वचकसंप्रैषे द्वौ वषट्कारौ समस्तावेव तत्र द्विरनुमन्त्रयेत ॥ १५ न चाग्ररुत्तरस्मिन् १६ वाजिनभक्षमिडामिव प्रतिगृह्योपहवमिच्छेत १७ अध्वर्य उपह्वयस्व ब्रह्मन्नुपह्वयस्वाग्नीदुपह्वस्वेति १८ यन्मे रेतः प्रसिच्यते यद्वा मे अपि गच्छति यद्वा जायते पुनः । तेन मा शिवमाविश तेन मा वाजिनं कुरु । तस्य त वाजिपीतस्योपहूतस्योपहूतो भक्षयामीति प्राणभक्षं भक्षयेत् ॥ १९ एवमध्वर्युर्ब्रह्माग्नीध्रः २० यजमानः प्रत्यक्षमितरे च दीक्षिताः २१ पौर्णमासेनेष्ट्वा चातुर्मास्यव्रतान्युपेयात् २२ केशान्निवर्तयीत २३ श्मश्रूणि वापयीत । अधः शयीत । मधुमांसलवणस्त्र्यवलेखनानि वर्जयेत् २४ ऋतौ भार्यामुपेयात् २५ वापनं सर्वेषु पर्वसु २६ आद्योत्तमयोर्वा २७ १६

पञ्चम्यां पौर्णमास्यां वरुणप्रघासैः १ पश्चाद्दार्शपौर्णमासिकाया वेदेरुपविश्य प्रेषितोऽग्निप्रणयनीयाः प्रतिपद्यते २ प्र देवं देव्या धियेति तिस्र इडायास्त्वाप देव यमग्ने विश्वेभिः स्वनीक देवैरित्यर्द्धर्च आरमेत् । आसीनः प्रथमा-मन्वाहोपांशु सप्रणवां ३ तत्र स्थानात् स्थानसङ्क्रमणे प्रणवेनावसाया-ऽनुच्छ्वस्योत्तरां प्रतिपद्यते ४ प्राणसन्ततं भवतीति विज्ञायते ५ उत्तर-मग्निमनुव्रजन्नुत्तराः ६ इमं महे विदथ्याय शूषमयमिह प्रथमो धायि धातृ-भिरिति तु राजन्यवैश्ययोराद्ये ७ पश्चादुत्तरस्या वेदेरवस्थाय ८ उत्तरवेदेस्तु सोमेषु ९ निहितेऽग्नौ सीद होतः स्व उ लोके चिकित्वान्नि होता होतृषदने विदान इति द्वे परिधाय तस्मिन्नेवासन उपविश्य भूर्भुवः स्वरिति वाचं विसृजेत १० अन्यत्रापि यत्रानुब्रुवन्ननुव्रजेत् ११ तिष्ठत्संप्रैषेषु तथैव वाग्विसर्गः १२ अग्निमन्थनादिसमाना वैश्वदेव्या १३ हविषान्तु स्थाने षष्ठप्रभृतीनामिन्द्राग्नी मरुतो वरुणः कः १४ इन्द्राग्नी अवसा गतं श्नथद्वृत्रमुत सनोति वाजं मरुतो यस्य हि क्षयेऽराइवेदं चरमा अहेवेमं मे वरुण श्रुधि तत्त्वायामि ब्रह्मणा वन्दमानः कयानश्चित्र आभुवद्धिरण्यगर्भः समवर्त्तताग्र इति प्रतिप्रस्थाता वाजिने तृतीयः १५ संस्थितायामवभृथं व्रजन्ति १६ तत्रावभृथेष्टिः कृताऽकृता १७ तामुपरिष्टाद्व्याख्यास्यामो द्वयोर्मासयोरैन्द्राग्नः पशुः १८ १७

तथा ततः साकमेधाः १ पूर्वेद्युस्तिस्र इष्टयोऽनुसवनं २ प्रथमायामग्नि-रनीकवान् । अनीकवन्तमूतयेऽग्निं गीर्भिर्हवामहे । स नः पर्षदतिद्विषः । सैनानीकेन सुविदत्रो अस्मे इति उत्तरस्यां वृधन्वन्तौ । मरुतः सान्तपनाः । सान्तपना इदं हविर्यो नो मरुतो अभिदुर्हृणायुरिति मरुद्भ्यो गृहमेधेभ्य उत्तरा आज्यभागप्रभृतोडान्ता ३ गृहमेधास आगत प्रबुध्न्या व ईरते महाँसीति ४ पुष्टिमन्तौ विराजौ संयाज्ये अनिगदे ५ अन्यत्राऽप्यनावाहने ६ आवाहनेऽपि पित्र्यायां पशौ च ७ बहु चैतस्यां रात्र्यामन्नं प्रसुवीरन् ८ तस्या विवासे पौर्णदर्वं जुहुयुः ९ ऋषभे रवाणे १० स्तनयित्नौ वा ११ आग्नीध्रं हैके रावयन्ति ब्रह्मपुत्रं वदन्तः १२ यदि होतारञ्चोदयेयुस्तस्य याज्यानुवाक्ये । पूर्णादर्वि परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो । देहि मे ददामि ते नि मे धेहि नि ते दधे । अपामित्थमिव सम्भरकोऽम्बा ददते ददादि-

ति १३ मरुद्भ्यः क्रीडिभ्य उत्तरा १४ उत ब्रुवन्तु जन्तवोऽयं कृत्नुरगृभीत इति परोक्षवार्त्रघ्नौ १५ क्रीडं वः शर्द्धो मारुतमत्यासो न ये मरुतः स्वञ्चः १६ जुष्टोदमूना अग्ने शर्ध महते सौभागायेति संयाज्ये । वाजिनावभृथवर्जं माहेन्द्रयुक्ता वरुणप्रघासैः १७ हविषान्तु सप्तमादीनां स्थान इन्द्रो वृत्रहेन्द्रो महेन्द्रो वा विश्वकर्मा १८ आतून इन्द्र वृत्रहन्ननु ते दायिमह इन्द्रियाय विश्वकर्मन् हविषा वावृधानो या ते धामानि परमाणि यावमेति १९ १८

दक्षिणाग्नेरग्निमतिप्रणीय पित्र्या १ सा शंय्वन्ता २ लुप्तजपा होतारमवृथा वषट्कारानुमन्त्रणाभिहिङ्कारवर्जं ३ तस्यां प्राञ्चि कर्माणि दक्षिणा ४ इतराणि तथान्वयं ५ उशन्तस्त्वा निधीमहीत्येतां त्रिरनवानन्ताः सामिधेन्यः ६ तासामुत्तमेन प्रणवेनावह देवान् पितृन् यजमानायेति प्रतिपत्तिः ७ अग्निं होत्रायावह स्वं महिमानमावहेत्येतस्य स्थानेऽग्निं कव्यवाहनमावाहयेत् ८ उत्तमे चैनं प्रयाजे प्रागाज्यपेभ्यो निगमयेत् ९ सूक्तवाके चाग्निर्होत्रेणेत्येतस्य स्थाने १० नेह प्रादेशः ११ न बर्हिष्मन्तौ प्रयाजानुयाजौ । नेडायां भक्षभक्षणं १२ न मार्जनं १३ न सूक्तवाके नामादेशः १४ ईक्षितः सीद होतरिति वोक्त उपविशेत् १५ जीवानुमन्तौ सव्योत्तर्युपस्थाः प्राचीनावीतिनो हविर्भिश्चरन्ति १६ दक्षिण आग्नीध्र उत्तरोऽध्वर्युः । द्वे द्वे अनुवाक्ये । अध्यर्धामनवानं १७ ओं स्वधेत्याश्रावणं । अस्तुस्वधेति प्रत्याश्रावणं । अनुस्वधास्वधेति सम्प्रैषः १८ ये स्वधेत्यागूर्ये स्वधा मह इति वा । स्वधा नम इति वषट्कारः १९ नित्याः प्लुतयः २० पितरः सोमवन्तः सोमो वा पितृमान् पितरो बर्हिषदः पितरोऽग्निष्वात्ता यमः २१ उदीरतामवर उत्परासस्त्वया हि नः पितरः सोमपूर्व उपहूताः पितरः सोम्यासस्त्वं सोम प्रचिकितो मनीषा सोमो धेनुं सोमो अर्वन्तमाशुं त्वं सोम पितृभिः संविदानो बर्हिषदः पितर ऊत्यार्वागाहं पितॄन् सुविदत्राँ अवित्सीदं पितृभ्यो नमो अस्त्वद्याग्निष्वात्ताः पितर एह गच्छत ये चेह पितरो ये च ने ह ये अग्निदग्धा ये अनग्निदग्धा इमं यमप्रस्तरमा हि सीदेति द्वे परेयिवांसम्प्रवतो महीरनु २२ वैवस्वताय चेन्मध्यमा याज्या २३ येतातृषुर्देवत्रा जेहमानास्त्वदग्ने काव्या त्वन्मनीषाः सप्रत्नया सहसा जायमान इति २४ अग्निः स्विष्टकृत् कव्यवाहनः २५ प्रकृत्यात ऊर्ध्वं २६

वषट्कारक्रियायां चोर्ध्वमाज्यभागाभ्यामन्यन्मन्त्रलोपात् २७ एकैका चानुवाक्या २८ यो अग्निः क्रव्यवाहनस्त्वमग्न ईडितो जातवेद इति संयाज्ये २९ भक्षेषु प्राणभक्षान् भक्षयित्वा बर्हिष्यनुप्रहरेयुः संस्थितायां प्राग्वा-नुयाजाभ्यां दक्षिणावृतो दक्षिणाग्निमुपतिष्ठन्ते ३० अनावृत्यानतिप्रणीत-चर्यायां ३१ अयाविष्ठा जनयन् कर्वराणि स हि घृणिरुर्वराय गातुः । स प्रत्युदैद्धरुणं मध्वो अग्रं स्वां यत्तनूं तन्वामैरयतेति ३२ आवृत्य त्वेवेतरौ ३३ आहवनीयं सुसन्दृशं त्वेति पंक्त्या ३४ गार्हपत्यमग्निं तम्मन्य इत्येकयर्चा न सूक्तेन ३५ अथैनमभिसमायन्ति मा प्रमा माग्ने त्वन्न इति जपन्तः ३६ पूर्वेण गार्हपत्यसूक्ते समाप्य सव्यावृतस्त्र्यम्बकान् व्रजन्ति ३७ तत्राध्वर्यवः कर्म्माधीयते ३८ प्रत्येत्यादित्यया चरन्ति ३९ पुष्टिमन्तौ धाय्ये विराजौ ४० १९

पञ्चम्यां पौर्णमास्यां शुनासीरीयया १ अर्वाग्यथोपपत्ति वा २ वाजिनवर्ज्जं समाना वैश्वदेव्या । हविषान्तु स्थाने षष्ठप्रभृतीनां वायुर्नियुत्वान् वायुर्वा शुनासीराविन्द्रो वा शुनासीर इन्द्रो वा शुनः सूर्य्य उत्तमः ३ आ वायो भूष शुचिपा उप नः प्रयाभिर्यासिदाश्वां समच्छस त्वन्नो देव मनसेशानाय प्रहुतिं यस्त आनट् शुनासीराविमां वाचं जुषेथां शुनन्नः फाला विकृषन्तु भूमिमिन्द्र वयं शुनासीर मेऽस्मिन् पक्षे हवामहे । स वाजेषु प्रनोविषत् । अश्वायन्तो गव्यन्तो वाजयन्तः शुनं हुवेम मघवानमिन्द्रमश्वायन्तो गव्यन्तो वाजयन्त-स्तरणिर्विश्वदर्शतश्चित्रं देवानामुदगादनीकमिति याज्यानुवाक्याः ४ समाप्य सोमेन यजेताशक्तौ पशुना ५ चातुर्मास्यानि वा पुनश्चातुर्मास्यानि वा पुनः ६ २०

पशौ १ इष्टिरुभयतोऽन्यतरतो वा २ आग्नेयी वा ३ आग्नावैष्णवी वा ४ उभे वा ५ अन्यतरा पुरस्तात् ६ उक्तमग्निप्रणयनं ७ पश्चात् पाशुबन्धिकाया वेदेरुपविश्य प्रेषितो यूपायाज्यमानायाञ्जन्ति त्वामध्वरे देवयन्त इत्युत्तमेन वचनेनार्द्धर्च आरमेत् ८ उच्छ्रयस्व वनस्पते समिद्धस्य श्रयमाणः पुरस्तादूर्ध्व ऊषुण ऊतय इति द्वे जातो जायते सुदिनत्वे अह्नामित्यर्द्धर्च आरमेत् । युवा

सुवासाः परिवीत आगादिति परिदध्यात् ९ यत्रैकतन्त्रे बहवः सपशवोऽन्त्यं परिधाय संस्तुयादनभिहिङ्कृत्य यान्वो नरो देवयन्तो निमिम्युरिति षड्भिः १० पञ्चभिर्वा । अनभ्यासमेके ११ उक्तमग्निमन्थनं तथा धाय्ये कृताकृतावाज्यभागौ । आवाहने पशुदेवताभ्यो वनस्पतिमनन्तरं १२ सम्मार्गैः सम्मृज्य प्रवृताहुतीर्जुहुयात् १३ जुष्टो वाचे भूयासं जुष्टो वाचस्पतये देवि वाक् । यद्वाचो मधुमत्तमं तस्मिन्माधाः सरस्वत्यै वाचे स्वाहा । पनरादाय पञ्चविग्राहं स्वाहा वाचे स्वाहा वाचस्पतये स्वाहा सरस्वत्यै स्वाहा सरस्वते महोभ्यः संमहेभ्यः स्वाहेति १४ सोम एवैके १५ प्रशास्तारं तीर्थेन प्रपाद्य दण्डमस्मै प्रयच्छेद्दक्षिणोत्तराभ्यां पाणिभ्यां मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रयच्छामीति १६ तथायुक्ताभ्यामेवेतरो मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रतिगृह्णाम्यवक्रो विथुरो भूयासमिति १७ प्रतिगृह्योत्तरेण होतारमतिव्रजेद्दक्षिणेन दण्डं हरेन्न चानेन संस्पृशेदात्मानं वान्यं वा प्रैषवचनात् १८ अन्यान्यपि यज्ञाङ्गान्युपयुक्तानि न विहारेण व्यवेयात् १९ दक्षिणो होतृषदनात् प्रह्वोऽवस्थाय वेद्यां दण्डमवष्टभ्य ब्रूयात् प्रैषांश्चादेशं २० अनुवाक्याञ्च सप्रैषे । पूर्वां प्रैषात् २१ पर्यग्निस्तोकमनीतोन्नीयमानसूक्तानि च २२ सोम आसीनोऽन्यत् २३ १

एकादश प्रयाजाः १ तेषां प्रैषाः २ प्रथमं प्रैषसूक्तं । उक्तं द्वितीये ३ अध्वर्युप्रेषितो मैत्रावरुणः प्रेष्यति । प्रैषैर्होतारं ४ होता यजत्याप्रीभिः प्रैषसलिङ्गाभिः ५ समिद्धो अग्निरिति शुनकानां जुषस्व नः समिधमिति वसिष्ठानां समिद्धो अद्येति सर्वेषां ६ यथाऋषि वा ७ प्राजापत्ये तु जामदग्न्यः सर्वेषां ८ दशसूक्तेषु प्रेषितो मैत्रावरुणोऽग्निर्होता न इति तृचं पर्यग्नयेऽन्वाह ९ अध्रिगवे प्रेष्योपप्रेष्य होतरिति वोक्तोऽजैदग्निरसनद्वाजमिति प्रैषमुक्त्वान्तर्वेददण्डं निदध्यात् १० अध्रिगुर्होतोहन्नङ्गानि दैवतं पशुमिति यथार्थं ११ पुंवन्मिथुने १२ मेधपती १३ मेधायां विकल्पः १४ यथार्थमूर्द्ध्वमध्रिगोरन्यन्मिथुनेभ्यः १५ सर्वेषु यजुर्निगदेषु १६ प्रकृतौ समर्थनिगमेषु १७ प्राकृतास्त्वेव मन्त्राणां शब्दाः १८ प्रतिनिधिष्वपि १९ नाभिरुपमा मेऽदो हविरित्यनूह्यानि २० २

दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेधं । प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनुसखा सयूथ्यः । उदीचीनां अस्य पदो निधत्तात् सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरं । एकधाऽस्य त्वचमाच्छ्यतात् पुरा नाभ्या अपि शसो वपामुत्खिदताद-न्तरेवोष्माणं वारयध्वात् । श्येनमस्य वक्षः कृणुतात् प्रशसा बाहू शला दोषणी कश्यपे वांसाछिद्रे श्रोणी कवषोरूस्रे कपर्णाष्ठीवन्ता षड्विंशतिरस्य वंक्रयस्ता अनुष्टयो च्यावयताद्गात्रं गात्रमस्यानूनं कृणुतात् । ऊवध्य गोहम्पार्थिवं खनतात् । अस्ना रक्षः संसृजतात् । वनिष्ठुमस्य माराविष्टोरूकम्मन्यमानानेद्वस्तोके तनये रवितारवच्छमितारः । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३उ अपाप १ अस्ना रक्षः संसृजताच्छ-मितारोऽपापेत्युपांशु २ एकधा षड्विंशतिरिति द्विर्द्विबहूनां ३ पुरान्तरिति चैके । अध्रिग्वादि त्रिरुक्त्वा शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद्दु-ष्कृतमन्यत्र तदिति जपित्वा दक्षिणावृदावर्त्तते ४ मैत्रावरुणश्च ५ सव्यावृतौ ब्रह्मयजमानौ । संज्ञप्ते पशावावर्त्तेरन् ६ ३

वपायां श्रप्यमाणायां प्रेषितः स्तोकेभ्योऽन्वाह जुष सप्रथस्तममिमं नो यज्ञमिति १ उक्तमादापनं स्वाहाकृतिभ्यः २ होता यक्षदग्निं स्वाहाज्यस्य स्वाहा मेदस इति प्रष उत्तमाऽऽप्रीयाज्या ३ वपा पुरोडाशो हविरिति पशोः प्रदानानि ४ तानि पृथङ्नानादेवतेषु ५ मनोताञ्च ६ न मनोताऽऽवर्त्तेतेत्येके ७ तेषां सलिङ्गाः प्रैषाः ८ तेष्वग्नीषोमयोः स्थाने या या पशुदेवता ९ छागस्थान उस्रो गौर्मेषोऽविको हयोऽश्वोऽन्वादेशे व्यक्तचोदनां १० एवं वनस्पतिस्वि-ष्टकृत्सूक्तवाकप्रैषेषु ११ प्राजापत्ये त्वग्निचित्या संयुक्ते वायव्यं पशुपुरोडाशं । एके वायव्ये प्राजापत्यं । तेन पशुदेवता वर्धत इत्याचार्याः पुरोडाशतत्प्र-धानत्वात् १२ पुरोडाशनिगमेषु पुरोडाशवद्धवींष्याज्यवर्जं येषां तेन समवत्तहोमः १३ मेधो रभीयानिति पश्वभिधाने १४ आदद्धसत् करज्जुषता-मघदग्रभीदवीवृधतेति देवतानां १५ ४

हुतायां वपयां सब्रह्मकाश्चात्वाले मार्जयन्ते निधाय दण्डं मैत्रावरुणः १ इदमापः प्रवहत सुमित्र्या न आप ओषधयः सन्तु दुर्मित्र्यास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इति २ एतावन्मार्जनं पशौ ३ तीर्थेन निष्क्रम्या-सीताऽऽपुरोडाशश्रपणात् ४ तेन चरित्वा स्विष्टकृता चरेयुः ५ यदि त्वन्वा-यात्यानि तैरग्रे चरेयुः ६ न तु तेषां निगमेष्वनुवृत्तिः ७ नान्येषा-मूर्द्ध्वमावाहनादुत्पन्नानां ८ इडामग्ने पुरुदंसं सनिं गोर्होता यन्नदग्निं पुरोडाशस्य स्वदस्व हव्यासमिषो दिदीहीति पुरोडाशस्विष्टकृतः ९ ऊर्ध्वमिडायाः १० ५

मनोतायै सम्प्रेषितस्त्वं ह्यग्ने प्रथम इत्यन्वाह १ हविषा चरन्ति २ तत्र प्रैषेकतर एवाग्नीषोमावेवमित्यैतरेयिणः ३ अन्यत्र द्विदेवतान्मैत्रावरुणदेवते च ४ तथा दृष्टत्वा ५ प्रकृत्या गाणगारिः ६ उपन्नानां स्मृत आम्नायेऽनर्थभेदे निरर्थो विकारः ७ याज्याया अन्तरार्धर्चौ वसाहोम आरमेत् ८ वनस्पतिना चरन्ति । प्रैषमभितो याज्यानुवाक्ये ९ यत्राग्नेराज्यस्य हविष इत्यत्राज्यभागौ १० अयाडग्निरग्नेराज्यस्य हविष इति स्विष्टकृति । इडामुपहूयानुयाजैश्चरन्ति ११ तेषां प्रैषास्तृतीयं प्रैषसूक्तमेकादशेह १२ प्रागुत्तमा द्वावावपेत । देवो वनस्पतिर्वसुवने वसुधेयस्य वेतु । देवं बर्हिर्वारितीनां वसुवने वसुधेयस्य वेत्विति १३ अनवानं प्रेष्यति । अनवानं यजति १४ उक्तमुत्तमे १५ सूक्तवाकप्रैषे पूर्वस्मिन्निगमे गृह्णन्नित्यत्राज्यभागौ २६ बध्नन्नमुष्मा अमुम्बध्नन्नमुष्मा अमुमिति पशूंश्च देवताश्च १७ देवताश्चैवैकपशुकाः १८ पशूंश्चैवैकदेवतान् १९ उत्तर आज्येनेत्याज्यभागौ । अमुष्मा अमुनेति पूर्वेणोक्तं २० समाप्य प्रैषमग्नौ दण्डमनुप्रहरेदनवभृथे २१ अवभृथेऽन्यत्र २२ कृताकृतं वेदस्तरणं । तीर्थेन निष्क्रम्याग्निपशुकेतनान्यव्यवयन्तो हृदयशूलमुपोय-मानमनुमन्त्रयेरञ्छुगसि योऽस्मान द्वेष्टि यञ्च वयं द्विष्मस्तमभिशोचेति २३ तस्योपरिष्टादप उपस्पृशन्ति । द्वीपे राज्ञो वरुणस्य गृहो मितो हिरण्ययः । स नो धृतव्रतो राजा धाम्नो धाम्न इह मुञ्चतु । धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च । यदापो अघ्न्या इति वरुणेति शपामह ततो वरुण ना मञ्च । मैवापो

मोषधीर्हिंसीरतो विश्वव्यचा अभूस्त्वेतो वरुण नो मुञ्च । सुमित्र्या न आप ओषधयः सन्त्विति च २४ अस्पृष्ट्वाऽनवेक्षमाणा असंस्पृशन्तः प्रत्यायन्तः समिधः कुर्वते तिस्रस्तिस्र एकैकः २५ अग्नेः समिदसि तेजोऽसि तेजो मे देहीति प्रथमां । एधोऽस्येधिषीमहीति द्वितीयां । समिदसि समेधिषीमहीति तृतीयां २६ एत्योपतिष्ठन्त आपो अद्यान्वचारिषमिति । ततः समिधोऽभ्यादधति यथागृहीतमग्नेः समिदसि तेजोऽसि तेजो मेऽदाः स्वाहा । सोमस्य समिदसि दुरिष्टेर्मा पाहि स्वाहा । पितॄणां समिदसि मृत्योर्मा पाहि स्वाहेति २७ ततः संस्थाजप इति पशुतन्त्रं २८ ६

प्रदानानामुक्ताः प्रैषाः १ तेषां याज्यानुवाक्याः २ सर्वेषामग्रेऽग्रेऽनुवाक्यास्ततो याज्याः ३ दैवतेन पशुनानात्वं ४ अग्ने नय सुपथा राये अस्मानिति द्वे पाहि नो अग्ने पायुभिरजस्रैः प्र वः शुक्राय भानवे भरध्वं यथा विप्रस्य मनुषो हविर्भिः प्र कारवो मनना वच्यमानाः ५ एका चेतत् सरस्वती नदी नामुस्या नः सरस्वती जुषाणा सरस्वत्यभि नो नेषिवस्यः प्र क्षोदसा धायसा सस्र एषा पावीरवी कन्या चित्रायर्यस्ते स्तनः शशयो यो मयोभूः ६ त्वं सोम प्रचिकितो मनीषेति द्वे त्वन्नः सोम विश्वतो वयोधा या ते धामानि दिवि या पृथिव्यामषाल्हं युत्सु पृतनासु पप्रिं या ते धामानि हविषा यजन्ति ७ यास्ते पूषन्नावो अन्तः समुद्र इति द्वे पूषेमा आशा अनुवेद सर्वाः शुक्रन्ते अन्यद्यजतन्ते अन्यत् प्र पथे पथामजनिष्ट पूषा पथस्पथः परि पतिं वचस्या ८ बृहस्पते या परमा परावदिति द्वे बृहस्पते अतियदर्यो अर्हात् तमृत्विया उप वाचः सचन्ते संयंस्तुभोऽवनयो नयन्त्येवापित्रे विश्वदेवाय वृष्णे ९ विश्वे अद्य मरुतो विश्वऊत्या नो देवानामुपवेतु शंस आ नो विश्व आस्क्रागमन्तु देवा विश्वेदेवाः शृणुतेमं हवं मे ये के च ज्यामहिनो अहिमाया अग्ने याहि दूत्यं मारिषण्यः १० इन्द्रं नरो नेमधिता हवन्त इति तिस्र उरुन्नो लोकमनुनेषि विद्वान् प्रससाहिषे पुरुहूत शत्रून् स्वस्तये वाजिभिश्च प्रणेतः ११ शुची वो हव्या मरुतः शुचीनां नूस्थिरं मरुतो वीरवन्तमा वो होता जोहवीति सत्तः प्र चित्रमर्कं गृणते तुरायाराइवेदचरमा अहेव या वः शर्म शशमानाय सन्ति १२ आ वृत्रहणा वृत्रहभिः शुष्मैराभरतं शिक्षतं वज्रबाहू उभा वामिन्द्राग्नी आहुवध्यै शुचिन्नु

स्तोमन्नवजातमद्य गीर्भिर्विप्र प्रमतिमिच्छमानः प्रचर्षणिभ्यः पृतना हवेषु १३ आ देवो यातु सविता सुरत्नः सघानो देवः सविता सहावेति द्वे उदीरय कवितमं कवीनां भगन्धियं वाजयन्तः पुरन्धिमिति द्वे १४ अव सिन्धु वरुणो द्यौरिव स्थादयं सु तुभ्यं वरुण स्वधा व एवा वन्दस्व वरुणं बृहन्तं तत्त्वायामि ब्रह्मणा वन्दमान इति द्वे अस्तभ्नात् द्यामसुरो विश्ववेदा इत्यैकादशिनाः १७ ७

अग्नीषोमाविमं सु मे युवमेतानि दिवि रोचनानीति तृचाव् आवां मित्रावरुणा हव्यजुष्टिमायातं मित्रावरुणा सुशस्त्या आ नो मित्रावरुणा हव्यजुष्टिं युव वस्त्राणि पीवसा वसाथे प्र बाहवा सिसृतं जीवसेनो यद्बंहिष्ठं नातिविधे सुदानू हिरण्यगर्भः समवर्त्तताग्र इति षट् प्राजापत्याश्चित्रं देवानामुदगादनीकमिति पञ्च शन्नो भव चक्षसा शन्नो अह्ना वायो भूष शुचिपा उप नः प्रयाभिर्यासि दाश्वांसमच्छा नो नियुद्भिः शतिनीभिरध्वरं पीवो अन्नाँ रयिवृधः सुमेधा रायेऽनुयं जज्ञतू रोदसी मे प्र वायुमछा बृहती मनीषा तव वायवृतस्य ते त्वां हि सुप्सरस्तममिति द्वे कुविदङ्ग नमसा ये वृधास ईशानाय प्र हुतिं यस्त आनट् प्र वो वायुं रथयुजं कृणुध्वं उत त्वामदिते मह्यनेहो न उरुव्रजेऽदितिर्ह्यजनिष्ट सुत्रामाणं पृथिवीं द्यामनेहसं महीमूषु मातरं सुव्रतानामदितिर्द्यौरदितिरन्तरिक्षं न ते विष्णो जायमानो न जातस्त्वं विष्णो सुमतिं विश्वजन्यां विचक्रमे पृथिवीमेष एतान्त्रिर्देवः पृथिवीमेष एतां परोमात्रया तन्वा वृधानेरावती धेनुमती हि भूतं विश्वकर्मन् हविषा वावृधान इति द्वे विश्वकर्मा विमना आद्विहायाः किंस्विदासीदधिष्ठानं यो नः पिता जनिता यो विधाता या ते धामानि परमाणि यावं आ य इमे द्यावापृथिवी जनित्री तन्नस्तुरीयमथ पोषयित्नु देवस्त्वष्टा सविता विश्वरूपो देव त्वष्टर्यद्ध चारुत्वमानट् पिशङ्गरूपः सुभरो वयोधाः प्रथमभाजं यशसं वयोधां सोमापूषणा जनना रयीणामिति सूक्तं आदित्यानामवसा नूतनेनेमा गिर आदित्येभ्यो घृतस्नूस्त आदित्यास उरवो गभीरा इमं स्तोमं सक्रतवो मे अद्य तिस्रो भूमीर्धारयन्त्रीरुत द्यून्न दक्षिणा वि- चिकितेन सव्या मही द्यावापृथिवी इह ज्येष्ठे ऋतं दिवे तदवोचं पृथिव्या इति द्वे प्र द्यावा यज्ञैः पृथिवी नमोभिरिति द्वे प्र द्यावायज्ञैः पृथिवी ऋतावृधा मृडानो रुद्रो तनोमयस्कधीति द्वे आ ते पितर्मरुतां सुम्नमेतु प्र बभ्रवे वृषभाय श्विती च

इति तिस्रः आ पश्चातान्नासत्या पुरस्तादागोमता नासत्या रथेनेति चतस्रो हिरण्यत्वङ्मधुवर्णो घृतस्नुः अभि क्रत्वेन्द्र भूरध ज्मस्त्वं महाँ इन्द्र तुभ्यं रुक्षाः सत्राहणं दाधृषिं तुम्रमिन्द्रं सहदानु पुरुहूत क्षियन्तं स्तुत इन्द्रो मघवा यद्ध वृत्रैवावस्व इन्द्रः सत्यः सम्राड् यद्वाग्वदन्त्यविचेतनानि पतङ्गो वाचं मनसा बिभर्त्ति चत्वारि वाक्परिमिता पदानि यज्ञेन वाचः पदवीयमायन्निति द्वे देवीं वाचमजनयन्त देवाः जनीयन्तोऽन्वग्रव इति तिस्रो दिव्यं सुपर्णं वायसं बृहन्तं स वावृधेनर्यो योषणासु यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः । यस्य व्रते पुष्टिपतिर्निविष्टस्तं सरस्वन्तमवसे हुवेम १ इति पशवः २ सौम्याश्च निर्मिताश्च ३ निर्मित ऐन्द्राग्नः ४ षाण्मास्यः सांवत्सरो वा ५ प्राजापत्य उपांशु सावित्रसौर्यवैष्णववैश्वकर्मणाश्चैतेषां तत्रोपांशुयाजविकारान् वक्ष्यामः ६ प्रैषादिरागुरस्थाने ७ आदद्धसत्करदिति चैतानि यथास्थान-मुपांशु ८ ८

सौत्रामण्यां १ आश्विनसारस्वतैन्द्राः पशवः । बार्हस्पत्यो वा चतुर्थः । ऐन्द्रसावित्रवारुणाः पशुपुरोडाशाः २ मार्जयित्वा युवं सुराममश्विनेति ग्रहाणां पुरोनुवाक्या । होता यक्षदश्विना सरस्वतीमिन्द्रं सुत्रामाणं सोमानां सुरा-म्णाञ्जुषन्तां व्यन्तु पिवन्तु मदन्तु सोमान् सुराम्णो होतर्यजेति प्रैषः । पुत्रमिव पितरावश्विनोभेति याज्या ३ अग्ने वीहीत्यनुवषट्कारः सुरासुतस्याग्ने वीहीति वा । नाना हि वां देवहितं सदस्कृतं मासं सृक्षाथां परमे व्योमनि । सुरा त्वमसि शुष्मिणीति सुरामवेक्ष्याधो बाहू सोम एष इति सोमं ४ यदत्र रिप्तं रसिनः सुतस्य यदिन्द्रो अपिवछचीभिः । इदं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामीति भक्षजपः ५ प्राणभक्षोऽत्र ६ ९

विध्यपराधे प्रायश्चित्तिः १ शिष्टाभावे प्रतिनिधिः २ अन्वाहिताग्नेः प्रयाणो-पपत्तौ पृथगग्नीन्नयेयुः ३ तुभ्यन्ता अङ्गिरस्तमेति वाऽऽज्याहुतिं हुत्वा समा-रोपयत् ४ अयं ते योनिर्ऋत्वियत्यरणी गार्हपत्ये प्रतितपेत् ५ पाणी वायाते अग्ने यज्ञिया--नूस्तयेह्यारोहात्मात्मानम छावसूनि कृण्वन्नर्यापुरूणि । यज्ञो भूत्वा यज्ञमासीद योनिं जातवेदो भुव आजायमान इति ६ एवमनन्वाहिता-

ग्निरहुत्वा ७ यदि पारायोररणी संस्पृश्य मन्थयेत् प्रत्यवरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् । प्रजां पुष्टिं रयिमस्मासु धेह्यथाभव यजमानाय शंयोरिति ८ आहवनीयमवदीप्यमानमर्वाक् शम्यापरासादिदन्त एकम्पर ऊत एकमिति संवपेत् ९ यदि त्वतीयाद्यद्यमावास्यां पौर्णमासीं वातीयाद्यदि वाऽन्यस्याग्निषु यजेत यदि वास्यान्योऽग्निषु यजेत यदि वास्यान्योऽग्निरग्नीन् व्यवेयाद्यदि वास्याग्निहोत्र उपसन्ने हविषि वा निरुप्ते चक्रीवच्छ्वा पुरुषो वा विहारमन्तरियाद्यदि वाध्वे प्रमीयेतेष्टिः १० अग्निः पथिकृत् ११ वेत्था हि वेधो अध्वन आदेवानामपि पन्थामगन्मेति । अनड्वान् दक्षिणा १२ व्यवाये त्वनग्निना प्रागिष्टेर्गामन्तरेणातिक्रमयेत् १३ भस्मना शुनः पदं प्रतिवपेदिदं विष्णुर्विचक्रम इति १४ गार्हपत्याहवनीययोरन्तरं भस्मराज्योदकराज्या च सन्तनुयात्तन्तु तन्वन्रजसो भानुमन्विहीति १५ अनुगमयित्वा चाहवनीयम्पुनः प्रणीयोपतिष्ठेत । यदग्ने पूर्वं प्रहितं पदं हिते सूर्यस्य रश्मीनन्वाततान । तत्र रयिष्ठामनुसम्भवतां सं नः सृज सुमत्या वाजवत्या । त्वमग्ने सप्रथा असीति च १६ अध्वे प्रमीतस्याभिवान्यवत्सायाः पयसाऽग्निहोत्रं तूष्णीं सर्वहुतं जुहुयुरासमवायात् १७ यद्याहिताग्निरपरपक्षे प्रमीयेताहुतिभिरेनं पूर्वपक्षं हरेयुः १८ हविषां व्यापत्ता ओल्हासु देवतास्वाज्येनेष्टिं समाप्य पुन रिज्या १९ व्यापन्नानि हवींषि केशनखकीटपतङ्गैरन्यैर्वा बीभत्सैः २० भिन्नसिक्तानि च २१ अपोऽभ्यवहरेयुः २२ प्रजापते न त्वदेतान्यन्य इति च वल्मीकवपायां वा सान्नाय्यं मध्यमेन पलाशपर्णेन जुहुयात् २३ विष्यन्दमानं मही द्यौः पृथिवी च न इत्यन्तः परिधिदेशे निर्वपेयुः २४ अन्यतरादोषे व्यासिच्य प्रचरेयुः २५ पुरोडाशं वा तत्स्थाने २६ उभयदोष ऐन्द्राग्नं पञ्चशरावमोदनं २७ तयोः पृथक् प्रचर्या २८ ऐन्द्रमेवेत्येके २९ वत्सानाधाने वायवे यवागूं ३० अग्निहोत्रमधिश्रितं स्रवदभिमन्त्रयेत । गर्भं स्रवन्तमगदमकर्माग्निर्होता पृथिव्यन्तरिक्षं यतश्चुतदग्नावेव तन्नाभिप्राप्नोति निर्ऋतिम्परस्तादिति ३१ १०

यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत्तामभिमन्त्रयेत । यस्माद्भीषा निषीदसि ततो नो अभयं कृधि । पशून्नः सर्वान् गोपाय नमो रुद्राय मील्हुष इति १ अथैनामुत्थापयेदुदस्थाद्देव्यदितिरायुर्यज्ञपतावधात् । इन्द्राय कृण्वतो

भागं मित्राय वरुणाय चेति २ अथास्या ऊधसि च मुखे चोदपात्रमुपोद्गृह्य दुग्ध्वा ब्राह्मणं पाययेद्यस्याभोद्दयन्त्स्याद्यावज्जीवं संवत्सरं वा ३ वाश्यमानायै यवसं प्रयच्छेत् सूयवसाद्भगवती हि भूया इति ४ शोणितं दुग्धं गार्हपत्ये संक्षाप्यान्येन जुहुयात् ५ भिन्नं सिक्तं वाऽभिमन्त्रयेत । समुद्रं वः प्रहिणोमि स्वां योनिमपि गच्छत । अरिष्टा अस्माकं वीरा मयि गावः सन्तु गोपताविति ६ यस्याग्निहोत्र्युपावसृष्टा दह्यमाना स्पन्देत सा यत् तत्र स्कन्दयेत् तदभिमृश्य जपेत् यदद्य दुग्धं पृथिवीमसृप्त यदोषधीरत्यसृपद्यदापः । पयो गृहेषु पयो अघ्न्यायां पयो वत्सेषु पयो अस्तु तन्मयीति ७ तत्र यत् परिशिष्टं स्यात् तेन जुहुयात् ८अन्येन वाभ्यानीय ९ एतद्दोहना-द्याप्राचीनहरणात् १० प्रजापतेर्विश्वभृति तन्वं हुतमसीति तत्र स्कन्नाभिमर्शनं ११ शेषेण जुहुयात् १२ पुनरुन्नीयाशेषे १३ आज्यमशेषे १४ एतदाहोमात् १५ वारुणीं जपित्वा वारुण्या जुहुयात् १६ अनशनमान्यस्माद्धोमकालात् १७ पुनर्होमश्च गाणगारिः १८ अग्निहोत्रं शरशरायत् समोषामुमिति द्वेष्टारमुदाहरेत् १९ विष्यन्दमानं मही द्यौः पृथिवी च न इत्याहवनीयस्य भस्मान्ते निनयेत् २० सान्नाय्यवद्बीभत्से २१ अभिवृष्टे मित्रो जनान्यातयति ब्रुवाण इति समिदाधानं २२ यत्र वेत्थ वनस्पत इत्युत्तरस्या आहुत्याः स्कन्दने २३ ११

प्रदोषान्तो होमकालः १ सङ्गवान्तः प्रातः २ तमतिनीय चतुर्गृहीतमाज्यं जुहुयात् ३ यदि सायं दोषा वस्तर्नमः स्वाहेति । यदि प्रातः प्रातर्वस्तर्नमः स्वाहेति । अग्निहोत्रमुपसाद्य भूर्भुवः स्वरिति जपित्वा वरं दत्त्वा जुहुयात् ४ इष्टिश्च वारुणी ५ हुत्वा प्रातर्वरदानं ६ अनुगमयित्वा चाहवनीयं पुनः प्रणयेदिहैव क्षेम्य एधि मा प्रहासीरमुम्मामुष्यायणमिति ७ तत इष्टिर्मित्रः सूर्यः ८ अभि यो महिनां दिवं प्र स मित्रमर्त्तो अस्तु प्रयस्वानिति संस्थितायां पत्न्या सह वाग्यतोऽग्नीन् ज्वलतोऽहरनश्नन्नुपासीत ९ द्वयोर्दुग्धेन वासे-ऽग्निहोत्रं जुहुयात् १० अधिश्रितेऽन्यस्मिन् द्वितीयमवनयेत् ११ प्रातरिष्टिः १२ अग्निर्व्रतभृत् १३ त्वमग्ने व्रतभृच्छुचिरग्ने देवाँ इहावह । उप यज्ञं हविश्च नः । व्रतानि बिभ्रद्व्रतपा अदब्धो यजानो देवाँ अजरः सुवीरः । दधद्रत्नानि

सुमृलीको अग्ने गोपायनो जीवसे जातवेद इति १४ एषैवार्त्त्याश्रुपाते १५ यद्याहवनीयमप्रणीतमभ्यस्तमियाद्बहुविद्ब्राह्मणोऽग्निं प्रणयेत् दर्भैर्हिरण्येऽग्रतो ह्रियमाणे १६ अभ्युदिते चतुर्गृहीतमाज्यं रजतञ्च हिरण्यवदग्रतो हरेयुः १७ अथैतदाज्यं जुहुयात् पुरस्तात् प्रत्यङ्मुख उपविश्योषाः केतुना जुषतां स्वाहेति १८ कालात्ययेन शेषः १९ न त्विहाग्निरनुगम्यः २० आहवनीये चेद्ध्रियमाणे गार्हपत्योऽनुगच्छेत् स्वेभ्य एनमवक्षामेभ्यो मन्थेयुरनुगमयेत्त्वितरं २१ क्षामाभावे भस्मनाऽरणी संस्पृश्य मन्थयेदितो जज्ञे प्रथममेभ्यो योनिभ्यो अधिजातवेदाः । सा गायत्र्या त्रिष्टुभा जगत्याऽनुष्टुभा च देवेभ्यो हव्यं वह नः प्रजानन्निति २२ मथित्वा प्रणीयाहवनीयमुपतिष्ठेताग्ने सम्राडिषे राये रमस्व सहसे द्युम्नायोर्जेऽपत्याय । सम्राडसि स्वराडसि सारस्वतौ त्वोत्सौ प्रावता-मन्नादं त्वान्नपत्यायादध इति २३ अत एवैके प्रणयन्त्यन्वाहृत्य दक्षिणं २४ सहभस्मानं वा गार्हपत्यायतने निधायाथ प्राञ्चमाहवनीयमुद्धरेत् २५ तत इष्टिरग्निस्तपस्वान् जनद्वान् पावकवान् २६ आयाहि तपसा जनेष्वग्ने पावको अर्चिषा । उपेमां सुष्टुतिं मम । आ नो याहि तपसा जनेष्वग्ने पावक दीद्यत् । हव्या देवेषु नो दधदिति । प्रणीतेऽनुगते प्राग्घोमादिष्टिः २७ अग्नि-र्ज्योतिष्मान् वरुणः २८ उदग्ने शुचयस्तवाग्ने बृहन्नुषसामूर्ध्वो अस्थादिति सर्वांश्चेदनुगतानादित्योऽभ्युदियाद्वाभ्यस्तमियाद्वाग्न्याधेयं पुनराधय वा २९ समारूल्हेषु चारणीनाशे ३० १२

अथाग्नेय्य इष्टयः १ व्रतातिपत्तौ व्रतपतये २ साग्नावग्निप्रणयनेऽग्निवते ३ क्षामायागारदाहे । शुचये संसर्जनेऽग्निनान्येन ४ मिथश्चेद्विविचये ५ गार्ह-पत्याहवनीययोर्वीतये ६ ग्राम्येण संवर्गाय ७ वैद्युतेऽप्सुमते । वैश्वानराय विमतानामन्नभोजने ८ एषैव कपाले नष्टेऽनुद्वासिते ९ अभ्याश्राविते वा १० सुरभय एव यस्मिञ्जीवे मृतशब्दः ११ त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतान्यग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निनाग्ने त्वमस्मद्युयोध्यमीवा अक्रन्द-दग्निस्तनयन्निव द्यौर्वि ते विष्वग्वात जूतासो अग्ने त्वामग्ने मानुषीरीडते विशोऽग्न आयाहि वीतये यो अग्निं देववीतये कुवित्सु नो गविष्टये मा नो अस्मिन् महाधनेऽप्स्वग्ने सधिष्टव यदग्ने दिविजा अस्यग्निर्होता न्यसीद-

द्यजीयात् साध्वीमकर्देववीतिन्नो ग्रठ्येति । यस्य भार्या गौर्वा यमौ जनये-दिष्टिर्मरुतः १२ सान्नाय्ये पुरस्ताच्चन्द्रमसाभ्युदितेऽग्निर्दातेन्द्रः प्रदाता विष्णुः शिपिविष्टः १३ ग्रग्नेदा दाशुषे रयिं सयन्ता विप्र एषां दीर्घस्ते ग्रस्त्वङ्कुशो भद्रा ते हस्ता सुकृतोत पाणी वषट् ते विष्णवास ग्राकृणोमि प्र तत्ते ग्रद्य शिपि-विष्टनामेति । ग्रपि वा प्रायश्चित्तेष्टीनां स्थाने तस्यै तस्यै देवतायै पूर्णाहुतिं जुहुयादिति विज्ञायते १४ हविषां स्कन्नमभिमृशेद्देवा जनमगन् यज्ञस्तस्य माशीरवतु वर्धतां । भूतिर्घृतेन मुञ्चतु यज्ञो यज्ञपतिमंहसः । भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहा । यज्ञस्य त्वा प्र मयोन्मयाऽभि मया प्रति मया द्रप्सश्च स्कन्देति १५ ग्राहुतिश्चेद्बहिष्परिध्याग्नीध्र एनां जुहुयात् १६ हुतवते पूर्णपात्रं दद्यात् १७ देवते ग्रनुवाक्ये याज्ये वा विपरिहृत्याज्ये ग्रवदाने हविषी वा यद्वो देवा ग्रतिपातयानि वाचा च प्रयुती देवहेडनं । ग्ररायो ग्रस्माँ ग्रभिदुछुनायतेऽन्यत्रास्मन्मरुतस्तन्निधेतन स्वाहेत्याज्याहुतिं हुत्वा मुख्यं धनं दद्यात् १८ स्थानिनीमनावाह्य देवतामुपोत्थायावाहयेत् १९ मनसेत्येके । ग्राज्येनास्थानिनीं यजेत् २० १३

हविषि दुःशृते चतुःशरावमोदनं ब्राह्मणान् भोजयेत् १ ज्ञामे शिष्टेनेष्ट्वा पुनर्यजेत २ ग्रशेषे पुनरावृत्तिः ३ प्रागावाहनाच्च दोषे ४ ग्रप्यत्यन्तं गणभूतानां ५ प्राक् स्विष्टकृत उक्तं प्रधानभूतानां ६ ग्रवदानदोषे पुनरायतनादवदानं ७ द्वेष्ट्रे त्विह दक्षिणां दद्यात् ८ दक्षिणादान उर्वरां दद्यात् ९ कपालं भिन्नमन-पवृत्तकर्म गायत्र्या त्वा शताक्षरया सन्दधामीति सन्धायापोऽभ्यवहरेयुरभिन्नो घर्मो जीरदानुर्यत ग्रार्त्तस्तदगन् पुनः । इध्मो वेदिः परिधयश्च सर्वे यज्ञ-स्यायुरनुसन्तरन्तु । त्रयस्त्रिंशत्तन्तवो यान्वितन्वत इमं यज्ञं स्वधया ये यजन्ते । तेऽभिच्छिद्रं प्रतिदध्मो यजत्र स्वाहा यज्ञो ग्रप्येतु देवानिति १० एवम-वलील्हाभिक्षिप्तेषु ११ ग्रप एवान्यानि मृण्मयानि भूमिर्भूमिमगान्माता मात-रमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति १२ यदि पुरोडाशः स्फुटेद्वोत्पतेत वा बर्हिष्येनं निधायाभिमन्त्रयेत किमुत्पतसि किमुत्प्रोष्ठाः शान्तः शान्तेरिहागहि । ग्रघोरो यज्ञियो भूत्वासीद सदनं स्वमासीद सदनं स्वमिति । मा हिंसीर्देवप्रेरित ग्राज्येन तेजसाऽऽज्यस्वमानः

किञ्चनरीरिषः । योगक्षेमस्य शान्त्या अस्मिन्नासीद बर्हिषीति १३ अग्निहोत्राय कालेऽग्नावजायमानेऽप्यन्यमानीय जुहुयुः १४ पूर्वालाभ उत्तरोत्तरं १५ ब्राह्मणपाण्यजकर्णदर्भस्तम्बाप्सु काष्ठेषु पृथिव्यां १६ हुत्वा त्वपि मन्थनं १७ पाणौ चेद्वासेऽनवरोधः १८ कर्णे चेन्मांसवर्जनं १९ स्तम्बे चेन्नाधिशयीत २० अप्सु चेदविवेकः २१ एतत्सांवत्सरं व्रतं यावज्जीविकं वा २२ अग्नावनुगतेऽन्तराहुती । हिरण्य उत्तरां जुहुयाद्धिरण्य उत्तरां जुहुयात् २३ १४

दर्शपूर्णमासाभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेन १ ऊर्द्ध्वं दर्शपूर्णमासाभ्यां यथोपपत्त्येके । प्रागपि सोमेनैके २ तस्यर्त्विजः ३ चत्वारस्त्रिपुरुषाः ४ तस्य तस्योत्तरे त्रयः ५ होता मैत्रावरुणोऽच्छावाको ग्रावस्तुदध्वर्युः प्रति-प्रस्थाता नेष्टोन्नेता ब्रह्मा ब्राह्मणाच्छंस्याग्नीध्रः पोतोद्गाता प्रस्तोता प्रतिहर्त्ता सुब्रह्मण्य इति ६ एते हीनैकाहैर्याजयन्ति ७ एत एवाहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशा दीक्षित्वा समोप्याग्नींस्तन्मुखाः सत्राण्यासते ८ तेषां समा-वापादि यथार्थमभिधानमैष्टिके तन्त्रे ९ दीक्षणाद्यनग्नीनां १० अग्निर्मुखमिति च याज्यानुवाक्ययोः ११ दण्डप्रदाने १२ प्रैषेषु निवित्सु १३ घृतयाज्यायां १४ कुह्वाञ्च १५ अच्छावाकनिगदोपहवप्रत्युपहवे च १६ आषयाणि गृहपतेः प्रवरित्वात्मादीनां मुख्यानां १७ एवं द्वितीयतृतीयचतुर्थानां १८ याव-न्तोऽनन्तर्हिताः समानगोत्रास्तावतां सकृत् १९ आवर्त्तयेद्वा द्रव्यान्वयाः संस्काराः २० साग्निचित्येषु क्रुतुषूखासम्भरणीयामिष्टिमेके २१ अग्निर्ब्रह्म-ण्वानग्निः क्षत्रवानग्निः क्षत्रभृत् २२ एतेनाग्ने ब्रह्मणा वावृधस्व ब्रह्म च ते जातवेदो नमश्च पुरूण्यग्ने पुरुधात्वाय सचित्र चित्रञ्चितयन्तमस्मे अग्निरीशे बृहतः क्षत्रियस्यार्चामिते सुमतिङ्घोष्यर्वागिति । इदम्प्रभृतिकर्मणां शनैस्तरा-मुत्तरोत्तरं २३ एतत्त्वपि पौर्णमासात् २४ प्रायणीयावत् सोमप्रवहणं २५ ऊर्ध्वं प्रथमाया अग्निप्रणयनीयाया औपवसथ्येऽनियमः २६ मध्यमादि घर्मे २७ १

दीक्षणीयायां धाय्ये विराजौ १ अग्नाविष्णू २ अग्निर्मुखं प्रथमो देवतानां

सङ्गतानामुत्तमो विष्णुरासीत् । यजमानाय परिगृह्य देवान् दीक्षयेदं हविरागच्छतं नः । अग्निश्च विष्णो तप उत्तमं महो दीक्षापालाय वनतं हि शक्रा । विश्वैर्देवैर्यज्ञियैः संविदानौ दीक्षामस्मै यजमानाय धत्तमिति । साग्निचित्ये त्रीण्यन्यानि ३ वैश्वानर आदित्याः सरस्वत्यदितिर्वा ४ धारयन्त आदित्यासो जगत्स्था इति द्वे एते एव भुवद्भ्यो भवनपतिभ्यो वा ५ नेदमादिषु मार्जनमर्वागुदयनीयायाः ६ इदमादीडायां सूक्तवाके चागूराशिःस्थाने ७ उपहूतोऽयं यजमानोऽस्य यज्ञस्यागुर उदृचमशीयेति तस्मिन्नुपहूतः ८ आशास्तेऽयं यजमानोऽस्य यज्ञस्यागुर उदृचमशीयेत्याशास्ते ९ न चात्र नामादेशः १० प्रकृत्याऽन्त्य ऊर्ध्वं पश्विडायाः ११ दीक्षितानां सञ्चरो गार्ह-पत्याहवनीयावन्तराग्नेः प्रणयनात् १२ दीक्षणादिरात्रिसङ्ख्यानेन दीक्षा अपरि-मिताः १३ एकाहप्रभृत्यासंवत्सरात् । संवत्सरन्त्वेव सव्रते १४ द्वादशा-हतापश्चितेषु यथासुत्योपसदः १५ कर्माचारस्त्वेकाहानां १६ एका तिस्रो वा दीक्षास्तिस्र उपसदः सुत्यमहरुत्तमं १७ दीक्षान्ते राजक्रयः १८ २

तदहः प्रायणीयेष्टिः १ पथ्या स्वस्तिरग्निः सोमः सविताऽदितिः स्वस्ति नः पथ्यासु धन्वस्विति द्वे अग्ने नय सुपथा राये अस्मानादेवानामपि पन्थामगन्म त्वं सोम प्रचिकितो मनीषा या ते धामानि दिवि या पृथिव्यामाविश्वदेवं सत्पतिं य इमा विश्वा जातानि सुत्रामाणं पृथिवीं द्यामनेहसं महीमूषु मातरं सुव्रतानां सेदग्निरग्नींरत्यस्त्वन्यानिति द्वे संयाज्ये । शंय्वन्तेयं २ अनाज्यभागा ३ संस्थितायां ४ ३

राजानं क्रीणन्ति १ तं प्रवक्ष्यत्सु पश्चादनसस्त्रिपदमात्रेऽन्तरेण वर्त्मनी अवस्थाय प्रेषितोऽग्नेऽभिहिंकारात्त्वं विप्रस्त्वं कविस्त्वं विश्वानि धारयन् । अप जन्यं भयं नुदेत्यस्यन्दयन् पार्ष्णी प्रपदेन दक्षिणापांसृंस्त्रिरुदुप्या-नुब्रूयाद्भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुर एता ते अस्तु । अथेमवस्यवर आपृथिव्या आ रे शत्रून् कृणुहि सर्ववीर इति तिष्ठन् २ अनुव्रजन्नुत्तरा अन्तरेणैव वर्त्मनी ३ सोम यास्ते मयोभुव इति तिस्रः सर्वे नन्दन्ति यशसाऽऽगतेनागन्देव क्रतुभिर्वर्धतु क्षयमित्यर्धर्च आरभेत् । अवस्थितेऽनसि दक्षिणात् पक्षादभि-

क्रम्य राजानमभिमुखोऽवतिष्ठते ४ प्रपाद्यमाने राजन्यग्रेणानोऽनुसंव्रजेत् ५ या ते धामानि हविषा यजन्तीमां धियं शिक्षमाणस्य देवेति निहिते परिदध्याद्राजानमुपस्पृशन् ६ वसनेंऽशुषु वा ७ ४

अथातिथ्येडान्ता १ तस्या अग्निमन्थनं २ धाय्ये अतिथिमन्तौ । समिधाग्निं दुवस्यताप्यायस्व समेतु त इति विष्णुरिदं विष्णुर्विचक्रमे तदस्य प्रियमभि-पाथो अश्यां होतारं चित्ररथमध्वरस्य प्र प्रायमग्निर्भरतस्य शृण्व इति संयाज्ये । संस्थितायामाज्यन्तानूनप्त्रं करिष्यन्तोऽभिमृशन्ति । अनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपाः । अनभिशस्त्यञ्जसा सत्यमुपगेषां स्विते माधा इति ३ स्पृष्ट्वोदकं राजानमाप्याययन्ति ४ इदमादि मदन्तीरबर्थ उपसत्सु ५ अंशुरंशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वाप्याययास्मान्त्सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामुदृचमशीयेति ६ स्पृष्ट्वोदकं निह्नवन्ते प्रस्तरे पाणीन्निधायोत्तानान् दक्षिणान्त्सव्यान्नीच एष्टा राय एष्टा वामानि प्रेषे भगाय । ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति ७ ५

स्पृष्ट्वोदकं प्रवर्ग्येण चरिष्यत्सूत्तरेण खरं परिव्रज्य पश्चादस्योपविश्य प्रेषितोऽभिष्टुयादृगावानं १ ऋचमृचमनवानमुक्त्वा प्रणुत्यावस्येत् २ ब्रह्म-जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आ वः । सबुध्न्या उप मा अस्य विष्ठाः सतश्च योनिमसतश्च विवः । इयं पित्रे राष्ट्र्येत्यग्रे प्रथमाय जनुषे भूम-नेष्ठाः । तस्मा एतं सुरुचं ह्वारमह्यं घर्मं श्रीणन्ति प्रथमस्य धासेः । महान्मही अस्तभायद्विजातो द्यां पिता सद्म पार्थिवञ्च रजः । सबुध्नादाष्ट जनुषाऽभ्युग्रं बृहस्पतिर्देवता तस्य सम्राट् । अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभिप्रियं मतिङ्कविम् । ऊर्ध्वा यस्या मतिर्भा अदिद्युतत् सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वस्तृपा स्वरिति वा । संसीदस्व महाँ असीति संसाद्यमाने । अञ्जन्ति यं प्रथयन्तो न विप्रा इत्यज्यमाने । पतङ्गमक्तमसुरस्य मायया यो नः स नुत्यो अभिदासदग्ने भवा नो अग्ने सुमना उपेताविति द्वृचाः । कृणुष्व पाजः प्रसितिं न पृथ्वीमिति पञ्च

परि त्वा गिर्वणो गिरोऽधि द्वयोरदधा उक्थं वचः शुक्रन्ते अन्यद्यजतन्ते अन्यदपश्यङ्गोपामनिपद्यमानं स्रक्के द्रप्सस्यायं वेनश्चोदयत् पृश्निगर्भाः पवित्रन्ते विततं ब्रह्मणस्पत इति द्वे वियत् पवित्रं धिषणा अतन्वत घर्मं शोचन्त प्रणवेषु बिभ्रतः । समुद्रे अन्तराय वो विचक्षणन्त्रिरक्षो नाम सूर्यस्य मन्वत । गणानां त्वा प्रथश्च यस्याऽपश्यं त्वेत्येतस्याद्यया यजमानमीक्षते द्वितीयया पत्नीं तृतीययाऽऽत्मानं काराधद्धोऽत्राश्विना वामिति - वा भात्यग्निर्ग्रावाणेवेडे द्यावापृथिवी इति प्रागुत्तमाया अरूरुचदुषसः श्निरग्रिय इत्यावपेतोत्तरेणा-र्धर्चेन पत्नीमोक्षेतोत्तमया परिहिते समुत्थाप्यैनानध्वर्यवो वाचयन्तीति तु पूर्वं पटलं ३ ६

अथोत्तरं १ उपविष्टेष्वध्वर्युर्घर्मदुघामाह्वयति स सम्प्रैष उत्तरस्य २ अनभि-हिंकृत्य ३ उपह्वय सुदुघां धेनुमेतामिति द्वे अभि त्वा देव सवितः समीं वत्सं न मातृभिः सं वत्स इव मातृभिर्यस्ते स्तनः शशयो यो मयोभूर्गौरमीयेदनु वत्सं मिषन्तं नमसेदुपसीदत सञ्जानाना उपसीदन्नभिज्ञवा दशभिर्विवस्वतो दुहन्ति सप्तैकां समिद्धो अग्निरश्विना तप्तो वां घर्म आगतं । दुह्यन्ते गावो वृषणेह धेनवो दस्रा मदन्ति कारवः । समिद्धो अग्निर्वृषणा रतिर्दिवस्तप्तो घर्मो दुह्यते वामिषे मधु । वयं हि वां पुरुतमांसो अश्विना हवामहे सधमादेषु कारवः । तदु प्रयक्षतममस्य कर्मात्मन्वन्नभो दुह्यते घृतम्पय उत्तिष्ठ ब्रह्मणस्पत इत्येतामुक्त्वाऽवतिष्ठते दुग्धायामधुक्षत्पिप्युषीमिषमित्याह्रियमाण उपद्रव पयसा गोषमा घर्म सिञ्च फ्य उस्रियायाः । वि नाकमख्यत्सविता वरेण्यो नु द्यावापृथिवी सुप्रणीतिरित्यासिच्यमान आ नूनमश्विनोर्ऋषिरिति गव्य आ सुते सिञ्चत श्रियमित्याज आसिक्तयोः समुत्ये महतीरप इति महावीरमादायोत्तिष्ठत्सूदूष्य देवः सविता हिरण्ययेत्यनूत्तिष्ठेत् प्रैतु ब्रह्मणस्प-तिरित्यनुव्रजेद्गन्धर्व इत्यापदमस्य रक्षतीति स्वरमवेक्ष्य तमतिक्रम्य नाके सुपर्णमुप यत्पतन्तमिति समाप्य प्रणवेनोपविशेदनिरस्य तृणं प्रेषितो यजति । तप्तो वां घर्मो नक्षति स्वहोता प्र वामध्वर्युश्चरति प्रयस्वान् । मधोर्दुग्धस्याश्विना तनाया वीतम्पातं पयस उस्रियायाः । उभा पिबतमश्विनेति चोभाभ्यामनवानमग्ने वीहीत्यनुवषट्कारो घर्मस्याग्ने वीहीति वा । ब्रह्मा

वषट्कृते जपत्यनुवषट्कृते च विश्वा आशा दक्षिणसाद्विश्वान्देवानयाडिह । स्वाहाकृतस्य घर्मस्य मध्वः पिबतमश्विनेत्येवमेवापराह्णिके । यदुस्रिया- स्वाहुतं घृतं पयोऽयं स वामश्विना भाग आगतं । माध्वी धर्त्तारा विदथस्य सत्पती तप्तङ्घर्मं पिबतं सोम्यं मधु । अस्य पिबतमश्विनेति चाप्रेषितो होता- ऽनुवषट्कृते स्वाहाकृतः शुचिर्देवेषु घर्मो यो अश्विनोश्चमसो देवपानः । तमीं विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्यास्ना रिहन्ति । समुद्रादूर्मिमुदियर्त्ति वेनो द्रप्सः समुद्रमभि यज्जिगाति सखे सखायमभ्याववृत्स्वोर्ध्व ऊषण ऊतय इति द्वे तङ्घ मित्था नमस्विन इति प्रागाथीं पूर्वाह्णे काण्वीमपराह्णेऽन्यतरां वात्यन्तं काण्वीन्त्वेवोत्तमे पावक शोचे तव हि क्षयं परीत्युक्त्वा भक्षमाकाङ्क्षेद् वाजिनेन भक्षोपायो हुतं हविर्मधु हविरिन्द्रतमेऽग्नावश्याम ते देव घर्म । मधुमतः पितुमतो वा जवतोऽङ्गिरस्वतो नमस्ते अस्तु मा मा हिँसीरिति भक्षजपः कर्मिणो घर्मं भक्षयेयुः सर्वे तु दीक्षिताः सर्वेषु दीक्षितेषु गृहपतेस्तृतीयोत्तमौ भक्षौ सम्प्रेषितः श्येनो न योनिं सदनन्धियाकृतमा यस्मिन् सप्त वासवा रोहन्तु पूव्यारुहः । ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः । सूयवसाद्भगवती हि भूया इति परिदध्यात् ४ उत्तमे प्रागुत्तमाया हविर्हष्मो महि सद्म दैव्य- मित्यावपेत ५ ७

अथोपसत् १ तस्यां पित्र्यया जपाः २ प्रादेशोपवेशने च ३ प्रकृत्ये होपस्थः ४ उपसद्यायमीढुष इति तिस्र एकैकान्त्रिरनवानन्ताः सामिधेन्यः ५ तासामुत्तमेन प्रणवेनाग्निं सोमं विष्णुमित्यावाह्योपविशेत् ६ नावाहयेदित्येके । अनावाहनेऽप्येता एव देवताः ७ अग्निर्वृत्राणि जङ्घनद्य उग्र इव शर्यहा त्वं सोमासि सत्पतिर्गयस्फानो अमीवहेदं विष्णुर्विचक्रमे त्रीणि पदा विचक्रम इति स्विष्टकृदादि लुप्यते । प्रयाजा आज्यभागौ च ८ नित्यमाप्यायनं निह्नवश्च ९ एषैवापराह्णे १० इमां मे अग्ने समिधमिमामिति तु सामिधेन्यः । विपर्यासो याज्यानुवाक्यानां । पाण्योश्च निह्नव इत्युपसदः ११ सुपूर्वाह्णे स्वपराह्णे च १२ राजक्रयाद्यहःसंख्यानेनैकाहानान्तिस्त्रः १३ षड्वा १४ अहीनानां द्वादश चतुर्विंशतिः संवत्सर इति सत्राणां १५ प्रथमयज्ञेनैके घर्मं १६ औपवसथ्य उभे पूर्वाह्णे १७ प्रथमस्यामुपसदि वृत्तायां प्रेषितः पुरीष्य-

चितयेऽन्वाह होता दीक्षितश्चेत् १८ यजमानोऽदीक्षिते १९ पश्चात्पदमात्रेऽवस्थायाभिहिंकृत्य पुरीष्यासो अग्नय इति त्रिरुपांशु सप्रणवां २० अपि वा सुमन्द्रं २१ व्रजत्स्वनुव्रजेत् २२ तिष्ठत्सु विसृष्टवाक् प्रणयतेति ब्रूयात् २३ अथाग्निं सञ्चितमनुगीतमनुशंसेत् २४ पश्चादग्निपुच्छस्योपविश्याभिहिंकृत्याग्निरस्मि जन्मना जातवेदा इति त्रिर्मध्यमया वाचा २५ एतस्मिन्नेवासने वैश्वानरीयस्य यजति २६ त्रयमेतत् साग्निचित्ये २७ ब्रह्माऽप्रतिरथ जपित्वा दक्षिणतोऽग्नेर्बहिर्वेद्यास्त औदुम्बर्याभिहवनात् २८ उक्तमग्निप्रणयनं २९ दीक्षितस्तु वसोर्धारामुपसर्पेत् ३० ८

हविर्धाने प्रवर्त्तयन्ति १ तदुक्तं सोमप्रवहणेन २ दक्षिणस्य तु हविर्धानस्योत्तरस्य चक्रस्यान्तरा वर्त्म पादयोः ३ युज वां ब्रह्म पूर्व्यं नमोभिः प्रेतां यज्ञस्य शम्भुवा युवां यमे इव यतमाने यदैतमधिद्वयोरदधा उक्थं वच इत्यर्धर्चे आरमेदव्यवस्ता चेद्रराटी ४ विश्वा रूपाणि प्रतिमुञ्च ते कविरिति व्यवस्तायां ५ मेथ्योरुपनिहतयोः परि त्वा गिर्वणो गिर इति परिदध्यात् ६ ९

अग्नीषोमौ प्रणेष्यत्सु तीर्थेन प्रपद्योत्तरेणाग्नीध्रीयायतनं सदश्च पूर्वया द्वारा पत्नीशालां प्रपद्योत्तरेण शालामुखीयमतिव्रज्य पश्चादस्योपविश्य प्रेषितोऽनुब्रूयात् । सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै । अथास्मभ्यं सवितः सर्वताता दिवे दिव आसु वा भूरिपश्व इत्यासीनः १ अनुव्रजन्नुत्तराः २ प्रैतु ब्रह्मणस्पतिर्होता देवो अमर्त्यः पुरस्तादुप त्वाग्ने दिवे दिवे दोषावस्तरुपप्रियं पनिप्रतमित्यर्धर्च आरमेत् । आग्नीध्रीये निहितेऽभिहूयमानेऽग्ने जुषस्व प्रतिहर्य तद्वच इति समाप्य प्रणवेनोपरमेत् ३ उत्तरेणाग्नीध्रीयमतिव्रजत्स्वतिव्रज्य सोमो जिगाति गातुविद्देवानां तमस्य राजा वरुणस्तमश्विनेत्यर्धर्च आरमेत् ४ प्रपद्यमानं राजानमनुप्रपद्येत । अन्तश्च प्रागा अदितिर्भवासि श्येनो न योनिं सदनं धिया कृतमस्तभ्नाद् द्यामसुरो विश्ववेदा इति परिदध्यात् । उत्तरया वा क्षेमाचारे ५ ब्रह्मैवमेव प्रपद्यापरेण वेदिमतिव्रज्य दक्षिणतः शालामुखीयस्योपविशेत् ६ स होतारमनूत्थाय यथेतमग्रतो व्रजेद्यदि राजानं प्रणयेत् ७ उक्तमप्रणयतः ८ प्राप्य हविधाने गृहपतये

राजानं प्रदाय हविर्धाने अग्रेणापरेण वाऽतिव्रज्य दक्षिणत आहवनीय-स्योपविशेत् ९ अग्निपुछस्य साग्निचित्यायां १० एतद्ब्रह्मासनं पशौ ११ प्रातश्चावपाहोमात् १२ यदि त्वग्रेण प्रत्येयात् प्रपाद्यमाने १३ १०

अथाग्नीषोमीयेण चरन्ति १ उत्तरवेद्यामादण्डप्रदानात् २ दण्डं प्रदाय मैत्रावरुणमग्रतः कृत्वोत्तरेण हविर्धाने अतिव्रज्य पूर्वया द्वारा सदः प्रपद्योत्तरेण यथास्वन्धिष्णावतिव्रज्य पश्चात् स्वस्य धिष्णंस्योपविशति होता ३ अवतिष्ठत इतरः ४ यदि देवसूनां हवींष्यन्वायातयेयुरग्निर्गृहपतिः सोमो वनस्पतिः सविता सत्यप्रसवी बृहस्पतिर्वाचस्पतिरिन्द्रो ज्येष्ठो मित्रः सत्यो वरुणो धर्मपती रुद्रः पशुमान् पशुपतिर्वा ५ त्वमग्ने बृहद्वयो हव्यवाडग्निरजरः पिता नस्त्वञ्च सोम नो वशो ब्रह्मा देवानां पदवीः कवीनामाविश्वदेवं सत्पतिं न प्रमिये सवितुर्दैव्यस्य तद्बृहस्पते प्रथमं वाचो अग्रं हंसैरिव सखिभि-र्वावदद्भिः प्रससाहिषे पुरुहूत शत्रून् भुवस्त्वमिन्द्र ब्रह्मणा महाननमीवास इडया मदन्तः प्रसमित्र मर्त्तो अस्तु प्रयस्वांस्त्वान्नष्टवान् महिमाय पृछते त्वया बद्धो मुमुक्षते । त्वं विश्वस्माद्भुवनात् पासि धर्मणा सूर्यात् पासि धर्मणा । यत् किञ्चेदं वरुण दैव्ये जन उप ते स्तोमान् पशुपा इवाकरमिति द्वे ६ ११

यद्यु वै सर्वपृष्ठान्यग्निर्गायत्रस्त्रिवृद्राथन्तरो वासन्तिक इन्द्रस्त्रैष्टुभः पञ्चदशो बार्हतो ग्रैष्मो विश्वेदेवा जागताः सप्तदशा वैरूपा वार्षिका मित्रावरुणा-वानुष्टभावेकविंशौ वैराजौ शारदौ बृहस्पतिः पांक्तस्त्रिणवः शाक्वरो हैमन्तिकः सविताऽतिच्छन्दास्त्रयस्त्रिंशो रैवतः शैशिरोऽदितिर्विष्णुपत्न्य-नुमतिः १ समिद्दिशामाशया नः स्वर्विन्मधुरेतो माधवः पात्वस्मान् । अग्निर्देवो दुष्टरीतुरदाभ्य इदं क्षत्रं रक्षतु पात्वस्मान् । रथन्तरं सामभिः पात्वस्मान् गायत्री छन्दसां विश्वरूपा । त्रिवृन्नो विष्ठया स्तोमो अह्नां समुद्रो वात इदमोजः पिपर्त्तु । उग्रा दिशामभिभूतिर्वयोधाः शुचिः शुक्रेऽहन्यो-जसीनां । इन्द्राधिपतिः पिपृतादतो नो महि क्षत्रं विश्वतो धारयेदं । बृहत्साम क्षत्रभृद्वृद्धवृष्णयं त्रिष्टुभौजः शुभितमुग्रवीरं । इन्द्रस्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष । प्राची दिशां सहयशा यशस्वती विश्वेदेवाः प्रावृषाह्नां

स्वर्वती । इदं क्षत्रं दुष्टरमस्त्वोजो नाधुष्यं सहस्यं सहस्वत् । वैरूपे सामन्निह तच्छकेयं जगत्येनं विक्ष्वावेशयानि । विश्वेदेवाः सप्तदशेन वर्च इदं क्षत्रं सलिलवातमुग्रं । धर्त्री दिशां क्षत्रमिदं दाधारोपस्थाशानां मित्रवदस्त्वोजः । मित्रावरुणा शरदाह्नां चिकित्वमस्मै राष्ट्राय महि शर्म यछतं । वैराजे सामन्नधि मे मनीषानुष्टुभा सम्भूतं वीर्यं सहः । इदं क्षत्रं मित्रवदार्द्रदातुं मित्रावरुणा रक्षतमाधिपत्ये । सम्राड्दिशां सहसाम्नी सहस्वत्पृितुर्हेमन्तो विष्ठया नः पिपर्त्तु । अवस्यु वाता बृहती तु शक्वरीमं यज्ञमवतु नो घृताची । स्वर्वती सुदुघा नः पयस्वती दिशां देव्यवतु नो घृताची । त्वङ्गोपाः पुर एतोत पश्चाद्बृहस्पते याम्यां युङ्धि वाचं । ऊर्ध्वा दिशां रन्तिराशौषधीनां संवत्सरेण सविता नो अह्नां । रेवत्सामातिछन्दा उच्छन्दोऽजातशत्रुः स्योना नो अस्तु । स्तोम त्रयस्त्रिंशे भुवनस्य पत्नि विवस्वद्वाते अभि नो गृणीहि । घृतवती सवितराधिपत्ये पयस्वती रन्तिराशा नो अस्तु । ध्रुवा दिशां विष्णुपत्न्यघोरास्येशाना सहसो याम नोता । बृहस्पतिर्मातरिश्वोत वायुः सन्ध्वाना वाता अभि नो गृणन्तु । विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना जगतो विष्णुपत्नी । व्यचस्वतीषयन्तो सुभूतिः शिवा नो अस्त्वदितेरुपस्थे । अनुनोद्यानुमतिर्यज्ञं देवेषु मन्यतां । अग्निश्च हव्यवाहनो भवतं दाशुषे मयः । अन्विदनुमते त्वं मन्यासै शञ्च नस्कृधि । क्रत्वेदक्षायनो हिनु प्र ण आयूंषि तारिषदिति । वैश्वानरीयं नवमं कायं दशमं २ को अद्य युक्ते धुरि गा ऋतस्येति द्वे । औपयजैरङ्गारैरनभिपरिहारे प्रयतेरन् ३ आग्नीध्रीयाच्चेदुत्तरेण होतारं ४ शामित्राच्चेद्दक्षिणेन मैत्रावरुणं ५ उपोत्थानमग्रे कृत्वा निष्क्रम्य वेदं गृह्णीयात् ६ नेदमादिषु हृदयशूलमर्वागनूबन्ध्यायाः ७ संस्थिते वसतीवरीः परिहरन्ति दीक्षिता अभिपरिहारयेरन् ८ १२

अथैतस्या रात्रेर्विवासकाले प्राग्वयसां प्रवादात् प्रातरनुवाकायामन्त्रितो वाग्यतस्तीर्थेन प्रपद्याग्नीध्रीये जान्वाच्याहुतिं जुहुयात् । आसन्यान्मा मन्त्रात् पाहि कस्याश्चिदभिशस्त्यै स्वाहेति १ आहवनीये वागग्रेगा अग्र एतु सरस्वत्यै वाचे स्वाहा । वाचं देवीं मनोनेत्रां विराजमुग्रां जैत्रीमुत्तमामेह भक्षां । तामादित्या नावमिवारुहेमानुमतां पथिभिः पारयन्तीं स्वाहेति द्वितीयां २

आतः समानं ब्रह्मणश्च ३ प्राप्य हविर्धाने रराटीमभिमृशत्यूर्व्यन्तरिक्षं वीहीति ४ द्वार्ये स्थूणे देवी द्वारौ मामासन्ताप्तं लोकं मे लोककृतौ कृणुतमिति ५ प्रपद्यान्तरेण युगधरा उपविश्य प्रेषितः प्रातरनुवाकमनुब्रूयान्मन्द्रेण ६ आपो रेवतीः क्षयथा हि वस्व उ प प्रयन्त इति सूक्ते अवा नो अग्न इति षडग्निमीडेऽग्निं दूतं वसिष्वाहीति सूक्तयोरुत्तमामुद्धरेत् त्वमग्ने व्रतपा इत्युत्तमामुद्धरेत् त्वन्नो अग्ने महोभिरिति नवेमे विप्रस्येतिसूक्ते युक्ष्वाहि प्रेष्ठं वस्त्वमग्ने बृहद्वय इत्यष्टादशार्चन्तस्त्वेतिसूक्ते अग्ने पावक दूतं व इतिसूक्ते अग्निर्होता नो अध्वर इति तिस्त्रोऽग्निर्होताग्न इडेति चतस्त्रः प्र वो वाजा उपसद्याय त्वमग्ने यज्ञानामिति तिस्त्र उत्तमा उद्धरेदग्ने हंस्यग्निं हिन्वन्तु नः प्राग्नये वाचमितिसूक्ते इमां मे अग्ने समिधमिमामिति त्रयाणामुत्तमामुद्धरेदिति गायत्रं त्वमग्ने वसूंस्त्वं हि क्षैतवदग्नायो होताऽजनिष्ट प्र वो देवायाग्ने कदा त इति पञ्च सखायः सं वस्त्वामग्ने हविष्मन्त इति सूक्ते बृहद्वय इति दशानां चतुर्थनवमे उद्धरेदुत्तमामुत्तमाञ्चादितस्त्रयाणामित्यानुष्टुभमबोध्यग्निः समिधेति चत्वारि प्राग्नये बृहते प्र वेधसे कवये त्वन्नो अग्ने वरुणस्य विद्वानित्येतत्प्रभृतीनि चत्वार्यूर्ध्व ऊषुणः ससस्ययद्वियुतेति पञ्च भद्रन्ते अग्न इति सूक्ते सोमस्य मातवसं प्रत्यग्निरुषस इति त्रीण्याहोतेति दशानां तृतीयाष्टमे उद्धरेद्दिवस्परीतिसूक्तयोः पूर्वस्योत्तमामुद्धरेत् त्वं ह्यग्ने प्रथम इति षण्णां द्वितीयमुद्धरेत् पुरो वो मन्द्रमिति चत्वारि तं सुप्रतीकमिति षट् हुवे वः सुद्योत्मानं नि होता होतृषदन इतिसूक्ते त्रिमूर्द्धानमिति त्रीणि वह्निं यशसमुपप्रजिन्वन्निति त्रीणि का त उपेतिरितिसूक्ते हिरण्यकेश इति तिस्त्रोऽपश्यमस्य महत इतिसूक्ते द्वे विरूपे इतिसूक्ते अग्ने नयाग्ने बृहन्नित्यष्टानामुत्तमादुत्तमास्तिस्त्र उद्धरेत् त्वमग्ने सुहवो रण्व सं दृगिति पञ्चाग्निं वो देवमिति दशानां तृतीयचतुर्थे उद्धरेदिति त्रैष्टुभं मे नावो अग्निं प्र वो यह्वमग्ने विवस्वत्सखा यस्त्वायमग्निरग्न आयाह्यच्छा नः शीरशोचिषमिति षट् अदर्शि गातुवित्तम इति सप्तेति बार्हतमग्ने वाजस्येति तिस्त्रः पुरु त्वा त्वमग्न ईडिष्वाहीत्यौष्णिहं जनस्य गोपास्त्वामग्न ऋतायव इममूषु वो अतिथिमुषर्बुधमिति नव त्वमग्ने द्युभिरितिसूक्ते त्वमग्ने प्रथमो अङ्गिरानूचित्सहोजा अमृतो नितुन्दत इति पञ्च वेदिषद इति षण्णां तृतीयमुद्धरेदिमं स्तोममर्हते संजागृवद्भिश्चित्र इच्छिशोर्वसुन्न चित्रमहसमिति जागतमग्निन्तं मन्य इति पांक्तं

७ इत्याग्नेयः क्रतुः ८ १३

अथोषस्यः १ प्रतिष्यासूनरीकस्त उष इति तिस्र इति गायत्रमुषो भद्रेभिरि- त्यानुष्टुभमिदं श्रेष्ठं पृथूरथ इतिसूक्ते प्रत्यर्चिरित्यष्टौ द्युतद्यामानमुषो वाजेनेदमुत्यदुदुश्रिय इतिसूक्ते व्युषा आ वो दिविजा इति षडिति त्रैष्टुभं प्रत्यु अदर्शि सह वामेनेति बार्हतमुषस्तच्चित्रमाभरेति तिस्र औष्णिहमेता उत्या इति चतस्रो जागतं महेनो अद्येति पांक्तमित्युषस्यः क्रतुः २ १४

अथाश्विनः १ एषो उषाः प्रातर्युजेति चतस्रोऽश्विना यज्वरीरिष आश्विनाव- श्वावत्यागोमदूषु नासत्येति तृचा दूरादिहेवेति तिस्र उत्तमा उद्धरेद्वाहिष्टो वां हवानामिति चतस्र उदीराथामा मे हवमिति गायत्रं यदद्यस्थ इतिसूक्ते आ नो विश्वाभिस्त्यञ्चिदत्रिमित्यानुष्टभमाभात्यग्निरितिसूक्ते ग्रावाणेव नासत्याभ्या- मिति त्रीणि धेनुः प्रत्नस्यक उ श्रवदितिसूक्ते स्तुषे नरेतिसूक्ते युवो रजांसीति पञ्चानां तृतीयमुद्धरेत् प्रतिवां रथमिति सप्तानां द्वितीयमुद्धरेदिति त्रैष्टभमिमा उ वामयं वामोत्यमह्न आरथमिति सप्त द्युम्नी वां यत्स्थ इति बार्हतमश्विना- वर्त्तिरस्मदाश्विनावेह गच्छतमिति तृचौ युवोरुषूरथं हुव इति पञ्चदशेत्यौ- ष्णिहमबोध्यग्निर्ज्म एषस्य भानुरावां रथमभूदिदं यो वां परिज्मेति त्रीणि त्रिश्चिन्नो अद्येडे द्यावापृथिवी इति जागतं प्रतिप्रियतममिति पांक्तं । इत्येतेषां छन्दसां पृथक् सूक्तानि प्रातरनुवाकः २ शतप्रभृत्यपरिमितः ३ नान्यैराग्नेयं गायत्र- मत्यावपेद्ब्राह्मणस्य ४ न त्रैष्टुभं राजन्यस्य । न जागतं वैश्यस्य ५ अध्या- सवदेकपदद्विपदाः ६ यथास्थानं ध्रुवाणि माङ्गलान्यगन्म महा तारिष्मेडे द्यावापृथिवी इति ७ सञ्जागृवद्भिरिति च यः प्रेष्यत्स्वर्गकामः ८ ईडेद्यावोयमावर्त्तयेदातमसोपघातात् ९ काल उत्तमयोत्सृप्यासनान्मध्य- मस्थानेन प्रतिप्रियतममित्युपसन्तनुयात् १० पुनरुत्सृप्योत्तमयोत्तमस्थानेन परिदध्यादन्तरेण द्वार्ये स्थूणे अनभ्याहतमाश्रावयन्निवाश्रावयन्निव ११ १५

परिहितेऽपयिष्य होतरित्युक्तोऽनभिहिंकृत्यापोनप्त्रीया अन्वाहेषच्छनैस्तरां परिधानीयायाः १ तासान्निगदादि शनैस्तरान्ताभ्यश्चाप्रसर्पणात् २ परं मन्द्रेण

३ प्रातःसवनञ्च ४ अध्यर्धकारं प्रथमाभृगावानमुत्तराः ५ वृष्टिकामस्य प्रकृत्या वा ६ प्रकृतिभावे पूर्वेष्वासामर्धर्चेषु लिङ्गानि काङ्क्षेत् ७ प्र देवत्रा ब्रह्मणे गातुरेत्विति नव हिनोतानो अध्वरं देव यज्येति दशमीं ८ आवर्वृततीरधनुद्विधारा इत्यावृत्तास्वेकधनासु ९ प्रति यदापो अदृश्रमायती–रिति प्रतिदृश्यमानासु १० आधेनवः पयसा तूर्ण्यर्थाः ११ समन्या यन्त्यु–पयन्त्यन्या इति १२ तीर्थदेशे होतृचमसेऽपां पूर्यमाण आपो न देवीरुपयन्ति होत्रियमिति समाप्य प्रणवेनोपरमेत् १३ आगतमध्वर्युमवेरपोऽध्वर्या३ उ इति पृच्छति । उतेमनन्नमुरिति प्रत्युक्तो निगदं ब्रुवन् प्रतिनिष्क्रामेत् १४ ता–स्वध्वर्यो इन्द्राय सोमं सोता मधुमन्तं वृष्टिवनिन्तीव्रान्तं बहुरमध्यं वसुमते रुद्रवत आदित्यवत ऋभुमते विभुमते वाजवते बृहस्पतिवते विश्वदेव्यावत इत्यन्तमनवानमुक्त्वोदगासाम्पथोऽवतिष्ठेत १५ उपातीतास्वन्वावर्त्तेत १६ यस्येन्द्रः पीत्वा वृत्राणि जङ्घनत् प्र सजन्यानि तारिषो३ मम्बयो यन्त्यध्वभिरिति तिस्रः १७ उत्तमयानुप्रपद्येत १८ एमा अग्मन्रेवतीर्जीवधन्या इति द्वे सन्ना–सूत्तरया परिधायोत्तरां द्वार्यामासाद्य राजानमभिमुख उपविशेदनिरस्य तृणं १९
१

उपांशुं हूयमानं प्राणं यच्छ स्वाहा त्वा सुहव सूर्याय प्राणप्राणं मे यच्छेत्यनुमन्त्र्य उः इत्यनुप्राणयात् १ अन्तर्याममपानं यच्छ स्वाहा त्वा सुहव सूर्यायापानापानं मे यच्छेत्यनुमन्त्र्य उं इति चाभ्यपान्यात् २ उपांशुसवनं ग्रावाणं व्यानाय त्वेत्यभिमृश्य वाचं विसृजेत ३ पवमानाय सर्पणेऽन्वक् छन्दोगान्मैत्रावरुणो ब्रह्मा च नित्यौ ४ तावन्तरेणेतरे दीक्षिताश्चेत् ५ द्रप्सश्च स्कन्देति द्वाभ्यां विप्रुढढोमौ हुत्वाऽध्वर्युमुखाः समन्वारब्धाः सर्पन्त्या–तीर्थदेशात् ६ तत्स्तोत्रायोपविशन्त्युद्गातारमभिमुखाः ७ तान् होतानुमन्त्र–यतेऽत्रैवासीनो यो देवानामिह सोमपीथो यज्ञे बर्हिषि वेद्यां । तस्यापि भक्षयामसि मुखमसि मुखं भूयासमिति ८ दीक्षितश्चेद्व्रजेत् स्तोत्रोपस्वाराय ९ सर्पेच्चोत्तरयोः सवनयोः १० ब्रह्मन् स्तोष्यामः प्रशास्तरिति स्तोत्राया–तिसर्जितावतिसृजतः ११ भूरिन्द्रवन्तः सवितृप्रसूता इति जपित्वों स्तुध्वमिति ब्रह्मा प्रातःसवने १२ भुव इति माध्यन्दिने स्वरिति तृतीयसवने । भूर्भुवः

स्वरिन्द्रवन्तः सवितृप्रसूता इत्यूर्ध्वमाग्निमारुतात् १३ स्तुत देवेन सवित्रा प्रसूता ऋतञ्च सत्यञ्च वदत । आयुष्मत्य ऋचो मा गात तनूपात् साम्न ओमिति जपित्वा मैत्रावरुण स्तुध्वमित्युच्चैः १४ २

अथ सवनीयेन पशुना चरन्ति १ यद्देवतो भवति २ आग्नेयोऽग्निष्टोम ऐन्द्राग्न उक्थ्ये द्वितीय ऐन्द्रो वृष्णिः षोडशिनि तृतीयः सारस्वती मेष्यतिरात्रे चतुर्थो ३ इति क्रतुपशवः ४ परिव्ययणाद्युक्तमग्नीषोमीयेणाचात्वालमार्जनाद्दण्ड-प्रदानवर्ज ५ उपविश्याभिहिंकृत्य परिव्ययणीयान् त्रिः ६ आवह देवान् सुन्वते यजमानायेत्यावाहनादिसुन्वच्छब्दोऽग्रे यजमानशब्दादैष्टिकेषु निगमेषु ७ नान्त्याद्धारियोजनादूर्ध्वं ८ न प्रावित्रं साधु ते यजमान देवता ओम-न्वतीतेऽस्मिन् यज्ञे यजमानेति च ९ प्रागाज्यपेभ्यः सवनदेवता आवाहयेदिन्द्रं वसुमन्तमावहेन्द्रं रुद्रवन्तमावहेन्द्रमादित्यवन्तमृभुमन्तं विभुमन्तं वाजवन्तं बृहस्पतिवन्तं विश्वदेव्यावन्तमावहेति १० ताः सूक्तवाक एवानुवर्त्तयेत् ११ प्रवृताहुतीर्जुह्वति वषट्कर्त्तारोऽन्येऽच्छावाकात् १२ चात्वाले मार्जयित्वा-ध्वर्युपथ उपतिष्ठन्त आदित्यप्रभृतीन् धिष्ण्यात् १३ आदित्यमग्रे । अध्वनामध्वपते श्रेष्ठः स्वस्त्यस्याध्वनः पारमशीयेति १४ यूपादित्या-हवनीयनिर्मन्थ्यानग्नयः सगराः सगरा अग्नय सगराः स्थ सगरेण नाम्ना । पातमाग्नयः पिपृतमाग्नयो नमो वो अस्तु मा मा हिंसिष्टेति १५ सव्यावृतः शामित्रोवध्यगोहचात्वालोत्करास्तावान् १६ एवमेव दक्षिणावृत आग्नीध्री-यमच्छावाकस्य वादं दक्षिणं मार्जालीयं खरमिति १७ उत्तरेणाग्नीध्रीयं परि-व्रज्य प्राप्य सदोऽभिमृशन्त्युर्व्यन्तरिक्षं वीहीति १८ द्वार्ये संमृश्यैव-मपरानुपतिष्ठन्ते १९ उपस्थितांश्चानुपस्थितांश्चाप्यपश्यन्ताव्यनीक्षमाणाः २० होता मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टेति पूर्वया द्वारा सदः प्रसर्पन्त्युरुन्नो लोकमनुनेषि विद्वानिति जपन्तः २१ उत्तरेण सर्वान् धिष्ण्यान्त्सन्नान्त्स-न्नानपरेण यथा स्वन्धिष्ण्यानां पश्चादुपविश्य जपन्ति । यो अद्य सौम्यो वधोघायूनामुदीरति । विषूकुहमिव धन्वना व्यस्याः परिपन्थिनं सदसस्पतये नम इति २२ एवमित्युपस्थानादिजपान्तमतिदिश्यते । तमन्वञ्च ऋत्विजः प्रसपकाः २३ पूर्वेणौडुम्बरीमपरेण धिष्ण्यान् यथान्तरमनूपविशन्ति २४

एतयाऽऽवृताऽऽग्नीध्र आग्नीध्रीयमप्याकाशं २५ दक्षिणादयो धिष्ण्या उदक्संस्थाः प्रसर्पिणां २६ आद्यौ तु विपरीतौ २७ तेषां विसंस्थितसञ्चरा यथास्वं धिष्ण्यानुत्तरेण २८ दक्षिणमधिष्ण्यानां २९ ३

अथैन्द्रैः पुरोडाशैरनुसवनं चरन्ति १ धानावन्तं करम्भिणमिति प्रातःसवनेऽनुवाक्या २ माध्यन्दिनस्य सवनस्य धाना इति माध्यन्दिने । तृतीये धानाः सवने पुरुष्टुतेति तृतीयसवने । होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्त्विति प्रैषो लिङ्गैरनुसवनं ३ उद्धृत्यादेशपदं तेनैवेज्या ४ होता यक्षदसौ यज योऽस्तु स्थान आगूर्वषट्कारौ यत्र क्व च प्रैषेण यजेत् ५ अथ स्विष्टकृतोऽग्ने जुषस्व नो हविर्माध्यन्दिने सवने जातवेदोऽग्ने तृतीये सवने हि कानिष इत्यनुसवनमनवाक्याः ६ होता यक्षदग्निपुरोडाशानामिति प्रैषो हविरग्ने वीहीति याज्या एतास्वनुवाक्यासु पुरोडाशशब्दं बहुवदेके ७ विज्ञायते पूयति वा एतदृचोऽक्षरं यदेनदूहति तस्मादृचं नोहेत् ८ ४

द्विदेवत्यैश्चरन्ति १ वायव इन्द्रवायभ्यां । वायवायाहि दर्शतेन्द्रवायू इमे सुता इत्यनुवाक्ये अनवानं पृथक्प्रणवे २ होता यक्षद्वायुमग्रेगां होता यक्षदिन्द्रवायू अर्हन्तेति प्रैषावनवानं ३ अग्रं पिबा मधूनामिति याज्ये अनवानमेकागुरे पृथग्वषट्कारे ४ इदमाद्यनवानं प्रातःसवन इज्यानुवाक्ये ५ प्रैषौ चोत्तरयोर्ग्रहयोः ६ हुत्वैतद्ग्रहपात्रमाहरत्यध्वर्युः ७ तद्गृह्णीयादैतुवसुः परूवसुरिति ८ प्रतिगृह्य दक्षिणमूरुमपोच्छाद्य तस्मिन् सादयित्वाऽऽकाशवतीभिरङ्गुलीभिरपिदध्यात् ९ एवमुत्तरे १० सव्येन त्वपिधाय तयोः प्रतिग्रहो भक्षणञ्च ११ मैत्रावरुणस्यायं वां मित्रावरुणा होता यक्षन्मित्रावरुणा गृणाना जमदग्निनेत्यैतुवसुविदद्वसुरिति प्रतिगृह्य दक्षिणेनैन्द्रवायवं हृत्वाऽभ्यात्मं सादनं । आश्विनस्य प्रातर्युजा विबोधय होता यक्षदश्विना नासत्या वावृधाना शुभस्पती इति । ऐतुवसुः संयद्वसुरिति प्रतिगृह्यैवमेव हृत्वोत्तरेण शिरः परिहृत्याभ्यात्मतरं सादनं १२ अनुवचनप्रैषयाज्यासु नित्योऽध्वर्युतः संप्रैषः १३ उन्नीयमानेभ्योऽन्वाहा त्वा वहन्त्वसाविदेवमिहोपयातेत्यनुसवनं १४ होता यक्षदिन्द्रं प्रातः प्रातः सावस्य । होता यक्षदिन्द्रं माध्यन्दिनस्य

सवनस्य होता यक्षदिन्द्रं तृतीयस्य सवनस्येति प्रेषितः प्रेषितो होताऽनुसवनं प्रस्थितयाज्याभिर्यजति १५ नामादेशमितरे १६ प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रः । अच्छावाकश्च १७ उत्तरयोः सवनयोः पुराऽऽग्नीध्रात् । इदन्ते सौम्यं मध मित्रं वयं हवामह इन्द्र त्वा वृषभं वयं मरुतो यस्य हि क्षयेऽग्ने पत्नीरिहावहोक्षान्नाय वशान्नायेति प्रातःसवनिक्यः प्रस्थितयाज्याः १८ पिबा सोममभियमुग्रतर्द इति तिस्रोऽर्वाङेहि सोमकामं त्वाहुस्तवायं सोमस्त्वमेह्यर्वाङिन्द्राय सोमाः प्र दिवो विदाना आ पूर्णो अस्य कलशः स्वाहेति माध्यन्दिन्यः । इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितमिन्द्रावरुणा सुतपाविमं सुतमिन्द्रश्च सोमं पिबतं वृहस्पत आ वो वहन्तु सप्त यो रघुष्पदो मे वनः सुहवा आहिगन्तनेन्द्राविष्णू पिबतं मध्वो अस्येमं स्तोममर्हते जातवेदस इति तार्त्तीयसवनिक्यः । सोमस्याग्ने वीहीत्यनुवषट्कारः १९ प्रस्थितयाज्यासु शस्त्रयाज्यासु मरुत्वतीये हारियोजने महिम्नि । आश्विने चेतरो अह्वये २० तदेषाऽभि यज्ञगाथा गीयते । ऋतुयाजान् द्विदेवत्यान् यश्च पात्नीवतो ग्रहः । आदित्यग्रहसावित्रौ तान्त्स्म माऽनुवषट्कृथा इति २१ प्रतिवषट्कारं भक्षणं २२ तूष्णीमुत्तरं २३ एत्यध्वर्युः २४ अयाडग्नीदिति पृच्छति २५ अयाडिति प्रत्याह २६ स भद्रमकर्यो नः सोमस्य पाययिष्यतीति होता जपति २७ ५

ऐन्द्रवायवमुत्तरेऽर्धे गृहीत्वाऽध्वर्यवे प्रणामयेदेषवसुः पुरूवसुरिहवसुः पुरूवसुर्मयिवसुः पुरूवसुर्वाक्या वाचं मे पात्युपहूता वाक् सह प्राणेनोप मां वाक् सह प्राणेन ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति १ अध्वर्य उप-ह्वयस्वेत्यक्त्वाऽवघ्राय नासिकाभ्यां वाग्देवी सोमस्य तृप्यत्विति भक्षयेत् सर्वत्र २ प्रतिभक्षितं होतृचमसे किञ्चिदवनीयानाचम्योपह्वानादि पुनः सं-भक्षयित्वा न सोमेनोच्छिष्टा भवन्तीत्युदाहरन्ति शेषं होतृचमस आनीयोत्सृजेत् ३ एवमुत्तरे ४ नत्वेनयोः पुनर्भक्षः ५ न कञ्चन द्विदेवत्यानामनव-नीतमवसृजेत् ६ मैत्रावरुणमेषवसुर्विदद्वसुरिहवसुर्विदद्वसुर्मयिवसुर्विद-द्वसुश्चक्षुष्पाश्चक्षुर्मे पाह्युपहूतं चक्षुः सह मनसोप मां चक्षुः सह मनसा

ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति ७ अक्षिभ्यां त्विहावेक्षणं दक्षिणेनाग्रे ८ सव्येन पाणिना हातृचमसमाददीतैतुवसूनां पतिर्विश्वेषां देवानां समिदिति ९ तस्यारत्निना तस्योरोर्वसनमपोच्छाद्य तस्मिंत्सादयित्वाऽऽकाशवतीभिरङ्गुलीभिरपिदध्यात् १० आश्विनं यथाहृतं परिहृत्य पुनः सादयित्वाऽध्वर्यवे प्रणामयेदेषवसुः संयद्वसुरिहवसुः संयद्वसुर्मयिवसुः संयद्वसुः श्रोत्रपा श्रोत्रं मे पाह्युपहूतं श्रोत्रं सहात्मनोप मां श्रोत्र सहात्मना ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति ११ कर्णाभ्यां त्विहोपोद्यच्छेद्दक्षिणायाग्रे निधाय होतृचमसं स्पृष्ट्वोदकमिडामुपह्वयते १२ उपोद्यच्छन्ति चमसान् १३ अवान्तरेडां प्राश्याचम्य होतृचमसं भक्षयेदध्वर्य उपह्वयस्वेत्युक्त्वा १४ दीक्षितो दीक्षिता उपह्वयध्वं १५ यजमाना इति वा १६ मुख्यान् वा पृथग्घोत्रका उपह्वयध्वमितीतरान् १७ एवमितरे १८ यथासभक्षं त्वदीक्षिताः १९ मुख्यचमसादचमसाः २० द्रोणकलशाद्वा २१ उक्तः सोमभक्षजपः सर्वत्र २२ होतुर्वषट्कारे चमसा हूयन्त उद्गातुर्ब्रह्मणो यजमानस्य तेषां होताऽग्रे भक्षयेदिति गौतमो भक्षस्य वषट्कारान्वयत्वात् २३ अभक्षणमितरेषामिति तौल्वलिः कृतार्थत्वात् २४ भक्षयेयुरिति गाणगारिरतः संस्कारत्वात् का च तच्चमसता स्यान्न चान्यः सम्बन्धः २५ भक्षयित्वाऽपाम सोमममृता अभूम शन्नो भव हृद आपीत इन्दविति मुखहृदये अभिमृशेरन् २६ आप्यायस्व समेतु ते सन्ते पयांसि समु यन्तु वाजा इति । चमसानाद्योपाद्यान् पूर्वयोः सवनयोः २७ आद्यांस्तृतीयसवने २८ सर्वत्रात्मानमन्यत्रैकपात्रेभ्यः २९ आप्यायितांश्चमसान् सादयन्ति ते नाराशंसा भवन्ति ३० ६

एतस्मिन् काले प्रपद्याच्छावाक उत्तरेणाग्नीध्रीयं परिव्रज्य पूर्वेण सद आत्मनो धिष्ण्यदेश उपविशेत् १ पुरोडाशदृगलं प्रत्तमिडामिवोद्यम्याच्छावाक वदस्वेत्युक्तोऽच्छा वो अग्निमवस इति तृचमन्वाह २ अन्त्येन प्रणवेनोपसन्तनुयाद्यजमानहोतरध्वर्योऽग्नीद्ब्रह्मन् पोतर्नेष्टरुतोपवक्तरिषेषयध्वमूर्जोऽर्जयध्वं नि वोजामयोजिहतान् यजाम योनिः सपत्नायामनिबाधितासो जयता भीत्वरीं

जयता भीत्वर्याश्रवद्व इन्द्रः शृणवद्वो अग्निः प्रस्थायेन्द्राग्निभ्यां सोमं वोचतोपो अस्मान् ब्राह्मणान् ब्राह्मणाह्वयध्वमिति ३ समाप्तेऽस्मिन् निगदेऽध्वर्युर्होतर्युपहवं काङ्क्षते ४ प्रत्येता सुन्वन् यजमानः सूक्ता वामाग्रभीत् । उत प्रतिष्ठोतोपवक्तरुत नो गाव उपहूता उपहूत इत्युपह्वयते ५ उपहूतः प्रत्यस्मा इत्युन्नीयमानायानूच्य प्रातर्यावभिरागतमिति यजति ६ निधाय पुरोडाशदृगलं स्पृष्ट्वोदकं चमसं भक्षयेत् ७ नास्पृष्ट्वोदकाः सोमेनेतराणि हवींष्यालभेरन् ८ आदायैनदादित्यप्रभृतीन् धिष्ण्यानुपस्थायापरया द्वारा सदः प्रसृप्य पश्चात् स्वस्य धिष्ण्यस्योपविश्य प्राश्नीयात् ९ उपविष्टे ब्रह्माग्नीध्रीयं प्राप्य हविरुच्छिष्टं सर्वे प्राश्नीयुः प्रागेवेतरे गता भवन्ति १० प्राश्य प्रतिप्रसृप्य ११ ७

ऋतुयाजैश्चरन्ति १ तेषां प्रैषाः २ पञ्चमं प्रैषसूक्तं ३ तेन तेनैव प्रेषितः प्रेषितः स स यथाप्रैषं यजति ४ होताऽध्वर्युगृहपतिभ्यां होतरेतद्यजेत्युक्तः ५ स्वयं षष्ठे पृष्णाहनि ६ पश्चादुत्तरवदेरुपविश्याध्वर्युः । पश्चाद्गार्हपत्यस्य गृहपतिः ७ अथैतदृतुपात्रमानन्तर्येण वषट्कर्तारो भक्षयन्ति ८ पृथगध्वर्युः प्रतिभक्षयेत् ९ तस्मिंश्चैवोपहवः १० ८

पराङध्वर्यावावृत्ते सुमत्पद्वग्दे पिता मातरिश्वा छिद्रापदाधादछिद्रोक्था कवयः शंसन् । सोमो विश्वविन्नीथानिनेषद्बृहस्पतिरुक्थामदानि शंसिषत् वागायुर्विश्वायुर्विश्वमायुः क इदं शंसिष्यति स इदं शंसिष्यतीति जपित्वाऽनभिहिङ्कृत्य शोंऽसावोमित्युच्चैराहूय तूष्णीं शंसं शंसेदुपांशु सप्रणवमसन्तन्वन् १ एष आहावः प्रातःसवने शस्त्रादिषु । पर्यायप्रभृतीनाञ्च । सर्वत्र चान्तःशस्त्रं २ तेन चोपसन्तानः ३ शस्त्रस्वरः प्रतिगर ओथामो दैवेति ४ शोंसामो दैवेत्याहावे ५ प्लुतादिः प्रणवेऽप्लुतादिरवसाने ६ प्रणवे प्रणव आहावोत्तरे ७ अवसाने च ८ प्रणवान्तो वा ९ यत्र यत्र चान्तःशस्त्रं प्रणवेनावस्यति । प्रणवान्त एव तत्र प्रतिगरः । शस्त्रान्ते तु प्रणवः १० भूरग्निर्ज्योतिर्ज्योतिरग्नों । इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रों । सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यो३मिति त्रिपदस्तूष्णींशंसः । यद्यु वै षट्पदः पूर्वैर्ज्योतिःशब्दैरग्रेऽवस्येत् ११ उच्चैर्निविदं यथानिशान्तमग्निर्देवेद्ध इति १२ नास्या आह्वानं १३ न चोपसन्तानः

१४ उत्तमेन पदेन प्र वो देवायेत्याज्यमुपसन्तनुयात् १५ एतेन निविद उत्तराः १६ सर्वे च पदसमाम्नायाः १७ उपसन्तानस्त्वन्यत्र १८ आह्वानञ्च निविदां १९ आज्याद्यां त्रिः शंसेदर्धर्चशो विग्राहं २० तन्निदर्शयिष्यामः । प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै । गमद्देवेभिरासनो यजिष्ठो बर्हिरासदो३मिति २१ ऋगावानं वैवमेव । एतेनाद्याः प्रतिपदामनृगावानं २२ अनुब्राह्मणं वानुपूर्व्यं २३ आहूयोत्तमया परिदधाति २४ सर्वशस्त्रपरिधानीयास्वेवं २५ उक्थं वाचि घोषाय त्वेति शस्त्वा जपेत् । अग्न इन्द्रश्च दाशुषो दुरोण इति याज्या । उक्थपात्रमग्रे भक्षयेत् २६ ततश्चमसांश्चमसिनः सर्वशस्त्रयाज्यान्तेषु २७ वषट्कर्तैकपात्राण्यादित्यग्रहसावित्रवर्जं २८ ९

स्तोत्रमग्रे शस्त्रात् १ एषेति प्रोक्त उद्गातुर्हिङ्कारे प्रातःसवन आह्वयीरन् २ प्रतिहार उत्तरयोः सवनयोः ३ वायुरग्रेगा यज्ञप्रीरिति सप्तानां पुरोरुचां तस्यास्तस्या उपरिष्टात् तृचं तृचं शंसेत् ४ वायवायाहि दर्शतेति सप्त तृचाः ५ द्वितीयां प्रउगे त्रिः ६ पुरोरुग्भ्य आह्वयीत षष्ठ्यां त्रिरवस्येदर्धर्चेऽर्धर्चे ७ उत्तमां न शंसेच्छंसन्त्येके तृच आह्वानमशंसने ८ माधुच्छन्दसं प्रउग-मित्येतदाचक्षते ९ उक्थं वाचि श्लोकाय त्वेति शस्त्वा जपेत् । विश्वेभिः सोम्यं मध्विति याज्या । प्रशास्ता ब्राह्मणाच्छंस्यच्छावाक इति शस्त्रिणो होत्रकाः १० तेषां चतुराहावानि शस्त्राणि प्रातःसवने तृतीयसवने पर्यायेष्व-तिरिक्तेषु च ११ पञ्चाहावानि माध्यन्दिने १२ स्तोत्रियानुरूपेभ्यः प्रतिपदनु-चरेभ्यः प्रगाथेभ्यो धाय्याभ्य इति पृथगाह्वानं १३ होतुरपि १४ तेभ्य-श्चान्यदनन्तरं १५ आदौ निविद्धानीयानां सूक्तानामनेकञ्चेत् प्रथमेष्वाहावः १६ आपोदेवते च तृचे १७ तेषां तृचाः स्तोत्रियानुरूपाः शस्त्रादिषु सर्वत्र १८ माध्यन्दिने प्रगाथास्तृतीयाः १९ यथाग्रहणमन्यत् २० याज्यान्तानि शस्त्राणि २१ उक्थं वाचीत्येषां शस्त्वाजपः प्रातःसवने २२ ऊर्द्ध्वञ्च षो-डशिनः सर्वेषां २३ उक्थं वाचीन्द्रायेति माध्यन्दिन उक्थं वाचीन्द्राय देवेभ्य इत्युक्थेषु सषोडशिकेषु २४ अनन्तरस्य पूर्वेण २५ स्तोत्रियेणानुरूपस्य छन्दःप्रमाणलिङ्गदैवतानि २६ आर्षञ्चैके २७ आ नो मित्रावरुणा नो गन्तं रिशादसा प्र वो मित्राय प्रमित्रयोर्वरुणयोरिति न वायातं मित्रावरुणेति याज्या

। आयाहि सुषुमाहित इति षट् स्तोत्रियानुरूपावनन्तराः सप्तेन्द्र त्वा वृषभमुद्धेदभीति तिस्र इन्द्र क्रतुविदं सुतमिति याज्या । इन्द्राग्नी आगतं सुतमिन्द्राग्नी अपसस्परि तोशा वृत्रहणा हुव इति तिस्र इहेन्द्राग्नी उपेयं वामस्य मन्मन इति नवेन्द्राग्नी आगतं सुतमिति याज्या २८ १०

संस्थितेषु सवनेषु षोडशिनि चातिरात्रे प्रशास्तः प्रसुहीत्युक्तः सर्पतेति प्रशास्ताऽतिसृजेत् । होता दक्षिणेनौदुम्बरीमञ्जसेतरेऽपरया द्वारोत्तरां वेदिश्रोणीमभिनिःसर्पन्ति १ मृगतीर्थमित्येतदाचक्षते २ एतेन निष्क्रम्य यथार्थं न त्वेवान्यन्मूत्रेभ्यः ३ एते न निष्क्रम्य कृत्वोदकार्थं वेद्यां समस्तानुपस्थायापरया द्वारा नित्ययाऽऽवृता सदोद्वार्ये चाभिमृश्य तूष्णीं प्रतिप्रसर्पन्ति ४ एषाऽऽवृत् सर्पतेतिवचने ५ पूर्वयैव गृहपतिः ६ ११

एतस्मिन् काले ग्रावस्तुत् प्रपद्यते १ तस्योक्तमुपस्थानं २ पूर्वया द्वारा हविर्धाने प्रपद्य दक्षिणस्य हविर्धानस्य प्रागुदगुत्तरस्याक्षशिरसस्तृणं निरस्य राजानमभिमुखोऽवतिष्ठते ३ नात्रोपवेशनः ४ यो अद्य सौम्य इति तु ५ अथास्मा अध्वर्युरुष्णीषं प्रयच्छति ६ तदञ्जलिना प्रतिगृह्य । त्रिः प्रदक्षिणं शिरः समुखं वेष्टयित्वा यदा सोमांशूनभिषवाय व्यपोहन्त्यथ ग्राब्णोऽभिष्टुयात् ७ मध्यमस्वरेणेदं सवनं ८ अभि त्वा देव सवितर्युञ्जते मन उत युञ्जते धिय आतून इन्द्र क्षुमन्तं मा चिदन्यद्विशंसत प्रैते वदत्वित्यर्बुदं ९ प्रागुत्तमाया आ व ऋञ्जसे प्र वो ग्रावाण इति १० सूक्तयोरन्तरोपरिष्टात् पुरस्ताद्वा पावमानीरोप्य यथार्थमावाग्ग्रहग्रहणाच्छिष्टया परिधाय वेद्यं यजमानस्योष्णीषं ११ आदाय यथार्थमन्त्येष्वहःसु १२ प्रतिप्रयच्छेदितरेषु १३ अथापरमभिरूपं कुर्यादिति गाणगारिः १४ आप्यायस्व समेतु त इति तिस्रो मृजन्ति त्वा दशक्षिप एतमुत्यं दशक्षिपो मृज्यमानः सुहस्त्या दशभिर्विवस्वतो दुहन्ति सप्तैकामधुक्षत् पिप्युषीमिषमा कलशेषु धावति पवित्रे परिषिच्यत इत्येका कलशेषु धावति श्येनो वर्म विगाहत इति द्वे । एतासामर्बुदस्य चतुर्थीमुद्धृत्य तृचान्तेषु तृचानवदध्यात् १५ आप्याय्यमाने प्रथमं १६ मृज्यमाने द्वितीय १७ दुह्यमाने तृतीयं १८ आसिच्यमाने चतुर्थं १९ बृहच्छब्दे बृहच्छब्दे चतुर्थीं २० मा

चिदन्यद्धि शंसतेति यदि ग्रावाणः संह्वादेरन् २१ समानमन्यत् २२ अर्बुदमेवेत्येके २३ प्र वो ग्रावाण इत्येके २४ उक्तं सर्पणं २५ स्तुते माध्यन्दिने पवमाने विहृत्याङ्गारान् २६ १२

दधिघर्मेण चरन्ति प्रवर्ग्यवांश्चेत् १ तस्योक्तमृगावानं घर्मेण २ इज्या भक्षणश्च ३ होतर्वदस्वेत्युक्त उत्तिष्ठतावपश्यतेत्याह ४ श्रातं हविरित्युक्तः श्रातं हविरित्यन्वाह ५ श्रातं मन्य ऊधनि श्रातमग्नाविति यजति । अग्ने वीही-त्यनुवषट्कारः । दधिघर्मस्याग्ने वीहीति वा । मयि त्यदिन्द्रियं बृहन्मयि द्युम्नमुत क्रतुः । त्रिशुद्धर्मो विभातु म आकूत्या मनसा सह । विराजा ज्यो-तिषा सह । तस्य दोहमशीय ते तस्य त इन्द्रपीतस्य त्रिष्टुप्छन्दस उप-हूतस्योपहूतस्योपहूतो भक्षयामीति भक्षजपः । यं धिष्णवतां प्राञ्चमङ्गारै-रभिविहरेयुः । पश्चात् स्वस्य धिष्णस्योपविश्योपहवमिष्ट्वा परि त्वाऽग्ने पुरं वयमिति जपेत् ६ अनिष्ट्वा दीक्षितः ७ सवनीयानां पुरस्तादुपरिष्टाद्वा पशुपुरोडाशेन चरन्ति ८ अक्रियामेकेऽन्यत्र तदर्थवादवदनात् ९ क्रियामा-श्मरथ्योऽन्विताप्रतिषेधात् १० पुरोडाशाद्युक्तमानाराशंससादनात् । नत्विह द्विदेवत्या एतस्मिन् काले दक्षिणा नीयन्तेऽहीनैकाहेषु ११ कृष्णाजिनानि धून्वन्तः स्वयमेव दक्षिणापथं यन्ति दीक्षिताः सत्रेष्विदमहं मां कल्याण्यै कीर्त्यै तेजसे यशसेऽमृतत्वायात्मानं दक्षिणां नयानीति जपन्तः १२ उन्नेष्यमाणास्वाग्नीध्रीय आहुती जुह्वति १३ ददानीत्यग्निर्वदति वायुराह तथेति तत् । हन्तेति चन्द्रमाः सत्यमादित्यः सत्यमोमापस्तत् सत्यमाभरन् । दिशो यज्ञस्य दक्षिणा दक्षिणानां प्रियो भूयासं स्वाहा । प्राचि ह्येधि प्राचीं जुषाणा प्राच्याज्यस्य वेतु स्वाहेति द्वितीयां १४ क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते । वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णा-त्वित्यतीतास्वनुमन्त्रयेत प्राणि १५ अभिमृशेदप्राणि १६ कन्याञ्च १७ सर्वत्र चैवं १८ प्रतिगृह्याग्नीध्रीयं प्राप्य हविरुच्छिष्टं सव प्राश्नीयुः । प्राश्य प्रतिप्रसृप्य १९ १३

मरुत्वतीयेन ग्रहेण चरन्ति १ इन्द्र मरुत्व इह पाहि सोमं होता यक्षदिद्रं मरुत्वन्तं सजोषा इन्द्र सगणो मरुद्भिरिति । भक्षयित्वैतत् पात्रं मरुत्वतीयं शस्त्रं शंसेत् २ अध्वर्यो शोंऽसावोमिति माध्यन्दिने शस्त्रादिष्वाहावः ३ आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ ४ इन्द्र नेदीय एदिहीतीन्द्रनिहवः प्रगाथः ५ प्र नूनं ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः ६ तृचाः प्रतिपदनुचरा द्वृचाः प्रगाथाः । आऽतोऽर्धर्चं सर्वं ७ स्तोत्रियानुरूपाः प्रतिपदनुचराः प्रगाथाः सर्वत्र ८ प्राक् छन्दांसि त्रैष्टुभात् ९ सर्वांश्चैवाचतुष्पदाः १० पङ्क्तिषु द्विरवस्येत् द्वयोर्द्वयोः पादयोः ११ अर्धर्चशो वाऽऽश्विने १२ पच्छःशस्यगतां तु पच्छः १३ समासमुत्तमे पदे १४ पच्छोऽन्यत् १५ पादैरवसायार्धर्चान्तैः सन्तानः १६ अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्याः १७ प्र व इन्द्रा बृहत इति मरुत्वतीयः प्रगाथः १८ जनिष्ठा उग्र इति १९ एकभूयसीः शस्त्वा मरुत्वतीयां निविदन्दध्यात् सर्वत्र २० एवमयुजासु माध्यन्दिने २१ एकां तृचे । अर्धा युग्मासु २२ एकां शिष्ट्वा तृतीयसवने २३ अक्षिणी मृजानः परिदध्याद् ध्यायन्नेन आत्मनः २४ अन्यत्राप्येतया परिदधदेवं २५ उक्थ्यं वाचीन्द्राय शृण्वते त्वेति शस्त्वा जपेत् । ये त्वा हि हत्ये मघवन्नवर्धन्निति याज्या २६ १४

निष्केवल्यस्य १ अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति प्रगाथौ स्तोत्रियानुरूपौ । यदि रथन्तरं पृष्ठं २ यद्यु वै बृहत्वामिद्धि हवामहे त्वं ह्येहि चेरव इति ३ प्रगाथा एते भवन्ति ४ तां द्वे तिस्रस्कारं शंसेत् ५ चतुर्थषष्ठौ पादौ बार्हते प्रगाथे पुनरभ्यसित्वोत्तरयोरवस्येत् ६ बृहतीकारञ्चेत् तावेव द्विः ७ तृतीयपञ्चमौ तु काकुभेषु ८ प्रत्यादानाद्युत्तरा ९ एवमेत-त्पृष्ठेष्वहःस्विन्द्रनिहवब्राह्मणस्पत्यान् १० बृहतीकारमितरेषु पृष्ठेषु ११ बृह-द्रथन्तरयोश्च तृचस्थयोः १२ होत्रकाश्च येषां प्रगाथाः स्तोत्रियानुरूपाः १३ सर्वमन्यद्यथास्तुतं १४ परिमितशस्य एकाहः १५ स यद्युभयसामा यत् पवमाने तस्य योनिरनुरूपः १६ योनिस्थान एवैनामन्यत्र शंसेत् १७ ऊर्ध्वधाय्याया योनिस्थानं १८ अनेकानन्तर्ये सकृत् पृथग्वाऽऽह्वानं १९ एवमूर्ध्वमिन्द्रनिहवात् प्रगाथानां २० यद्वा वानेति धाय्या । पिबा सुतस्य

रसिन इति सामप्रगाथः २१ इन्द्रस्य नु वीर्य्याणीत्येतस्मिन्नैन्द्रीं निविदं दध्यात् २२ अनुब्राह्मणं वा स्वरः । उक्थं वाचीन्द्रायोपशृण्वते त्वेति शस्त्वा जपेत् । पिबा सोममिन्द्र मन्दतु त्वेति याज्या २३ १५

होत्रकाणां कया नश्चित्र आभुवत् कया त्वन्न ऊत्या कस्तमिन्द्र त्वा वसुं सद्यो ह जात एवा त्वामिन्द्रो शन्नुषुणः सुमना उ पाक इति याज्या १ तरोभिर्वो विदद्वसुन्तरणिरित्सिषासतीति प्रगाथौ स्तोत्रियानुरूपा उदिन्वस्य रिच्यते भूय इदिमामूष्वित्यपोत्तमामुद्धरेत् सर्वत्र पिबा वर्धस्व तव द्या सुतास इति याज्या २ १६

अथ तृतीयसवनमुत्तमस्वरेण १ आदित्यग्रहेण चरन्ति २ आदित्यानामवसा नूतनेन होता यक्षदादित्यान् प्रियान् प्रियधाम्न आदित्यासो अदितिर्मादयन्तामिति । नैतं ग्रहमीक्षेत हूयमानं ३ स्तुत आर्भवे पवमाने विहृत्याङ्गारान्मनोतादि पश्विडान्तं पशुकर्म कृत्वा पुरोडाशाद्युक्तमानाराशंससादनात् ४ सन्नेषु मृदिष्ठात् पुरोडाशस्य तिस्रस्तिस्रः पिण्ड्यो दक्षिणतः प्रतिस्वञ्चमसेभ्यः स्वेभ्यः पितृभ्य उपास्येयुरत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति ५ सव्यावृत आग्नीध्रीयं प्राप्य हविरुच्छिष्टं सर्वे प्राश्नीयुः ६ १७

सावित्रेण ग्रहेण चरन्ति १ अभूद्देवः सविता वन्द्यो नु नो होता यक्षद्देवं सवितारं दमूना देवः सविता वरेण्यो दधद्रत्नादक्ष पितृभ्य आयुनि । पिबात् सोमममदन्नेनमिष्टयः परिज्माचिद्रमते अस्य धर्मणीति वषट्कृते होता वैश्वदेवशस्त्रं शंसेत् २ सर्वा दिशो ध्यायेच्छंसिष्यन् । यस्यां द्वेष्यो न तां ३ अध्वर्यो शो शोंउसावोमिति तृतीयसवने शस्त्रादिष्वाहावः ४ तत् सवितुर्वृणीमहेऽघानो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरावभूद्देव एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विंशत्या च । तिसृभिश्च वहसे त्रिंशता च नियुद्भिर्वायविह ता विमुञ्च । प्र द्यावेति दैर्घतमसं सुरूपकृत्नुमूतये तक्षन्रथमयं वेनश्चोदयत् पृश्निगर्भा येभ्यो माता मधुमत् पिन्वते पय एवापित्रे विश्वदेवाय वृष्ण आ नो भद्राः क्रतवो यन्तु विश्वत इति नव वैश्वदेवं ५वैश्वदेवाग्निमारुतयोः

सूक्तेषु सावित्रादिनिविदो दध्यात् ६ चतस्रो वैश्वदेवे ७ उत्तरास्तिस्र उत्तरे ८ सूक्तानां तद्धि दैवतं ९ दैवतेन सूक्तान्तः १० धाय्याश्चात्रैकपातिनीः ११ अदितिर्द्यौरदितिरन्तरिक्षमिति परिदध्यात् सर्वत्र वैश्वदेवे द्विः पच्छोऽर्धर्चशः सकृद्भूमिमुपस्पृशन् १२ उक्थं वाचीन्द्राय देवेभ्य आ श्रुत्यै त्वेति शस्त्वा जपेत् । विश्वेदेवाः शृणुतेमं हवं म इति याज्या १३ १८

त्वं सोम पितृभिः संविदान इति सौम्यस्य याज्या १ तं घृतयाज्याभ्या-मुपांशूभयतः परियजन्ति २ घृताहवनो घृतपृष्ठो अग्निर्घृते श्रितो घृतग्वस्य धाम । घृतप्रुषस्त्वा हरितो वहन्तु घृतं पिबन् यजसि देव देवानिति पुरस्तात् । उरु विष्णो विक्रमस्वोरुक्षयाय नस्कृधि । घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिरेत्युपरिष्टात् । अन्यतरतश्चेदग्नाविष्णू महि धाम प्रियं वामित्युपांश्वेव ३ आहृतं सौम्यं पूर्वमुद्गातृभ्यो गृहीत्वाऽवेक्षेत । यत् ते चक्षुर्दिवि यत् सुपर्णे येनैकराज्यमजयोहिना । दीर्घं यच्चक्षुरदितेरनन्तं सोमो नृचक्षा मयि तद्-धात्विति ४ अपश्यन् हृदिस्पृक् क्रतुस्पृग्वर्चोदा वर्चो अस्मासु धेहि । यन्मे मनो यमं गतं यद्वा मे अपरागतं । राज्ञा सोमेन तद्वयमस्मासु धारयामसि । भद्रं कर्णेभिः शृणुयाम देवाँ इति च ५ अङ्गुष्ठोपकनिष्ठिकाभ्यामाज्येनाक्षिणी आज्य छन्दोगेभ्यः प्रयच्छेत् ६ विहृतेषु शालाकेष्वाग्नीध्रः पात्नीवतस्य यजत्यैभिरग्ने सरथं याह्यर्वाङित्युपांश्वेव ७ नेष्टारं विसंस्थितसञ्चरेणानुप्रपद्य तस्योपस्थ उपविश्य भक्षयेत् ८ १९

अथ यथेतं १ स्वभ्यग्रमाग्निमारुतं २ तस्याद्यां पच्छ ऋगावानं पच्छःशस्या चेत् ३ अर्धर्चश इतरां ४ सन्तानमुत्तमेन वचनेन ५ वैश्वानराय पृथुपाजसे शन्नः करत्यर्वते प्रत्वक्षसः प्रतवसो यज्ञा यज्ञा वो अग्नये देवो वो द्रविणोदा इति प्रगाथौ स्तोत्रियानुरूपौ प्रतव्यसीन्तव्यसीमापोहिष्ठेति तिस्रो वियतमप उपस्पृशन्नन्वारब्धेष्वपावृतशिरस्क इदमादि प्रति प्रतीकमाह्वानमुत नोऽ-हिबुध्न्यः शृणोतु देवानां पत्नीरुशतीरवन्तु न इति द्वे राकामहमिति द्वे पावीरवी कन्या चित्रायुरिमं यमप्रस्तरमाहिसीद मातलीकव्यैर्यमो अङ्गिरोभिरुदी-रतामवर उत्परास आहं पितॄन्त्सुविदत्राँ अवित्सीदं पितृभ्यो नमो अस्त्वद्य

स्वादुष्किलायमिति चतस्रो मध्ये चाह्वानं मदामो दैव मोदामो दैवोमित्यासां प्रतिगरौ ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा । यापत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ । विष्णोर्नुकं वीर्याणि प्रवोचं तन्तु तन्वन् रजसोर्भानुमन् विह्येवान इन्द्रो मघवा वीरप्शीति परिदध्यात् । भूमिमुपस्पृशन् ६ उत्तमेन वचनेन ध्रुवावनयनं कांक्षेत् ७ उक्थं वाचीन्द्राय देवेभ्य आश्रुताय त्वेति शस्त्वा जपेत् । अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिरिति याज्या । इत्यन्तोऽग्निष्टोमोऽग्निष्टोमः ८ २०

उक्थे तु होत्रकाणां १ एह्यूषु ब्रुवाणि त आग्निरगामि भारतश्चर्षणीधृत-मस्तभ्नाद्यामसुर इति तृचाविन्द्रावरुणा युवमावां राजानाविन्द्रावरुणा मधु-मत्तमस्येति याज्या । वयमु त्वामपूर्व्य यो न इदमिदं पुरेति प्रगाथौ सर्वाः ककुभः प्रमंहिष्ठायोदप्रुतोऽच्छाम इन्द्रं बृहस्पते युवमिन्द्रश्च वस्व इति याज्या । अघाहीन्द्र गिर्वण इयन्त इन्द्र गिर्वण क्रतुर्जनित्रीनूमर्त्तो भवा मित्रः स वां कर्मणेन्द्राविष्णू मदपती मदानामिति याज्या २ इत्यन्त उक्थ्यः ३ १

अथ षोडशी १ असावि सोम इन्द्र त इति स्तोत्रियानुरूपौ २ आ त्वा वहन्तु हरय इति तिस्रो गायत्र्यः ३ उपोषु शृणुही गिरः सुसंदृशन्त्वा वयं मघवन्नि-त्येका द्वे च पङ्क्ती ४ यदिन्द्र पृतना ज्येयन्ते अस्तु हर्यत इत्यौष्णिहबार्हतौ तृचौ । आधूर्ष्वस्मा इति द्विपदा ५ ब्रह्मन् वीर ब्रह्मकृतिं जुषाण इति त्रिष्टुप् । एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे । विस्तुतयो यथापथ इन्द्र त्वद्यन्ति रातयः । त्वामिच्छवसस्पते यन्ति गिरो न संयत इति तिस्रो द्विपदाः । प्र ते महे विदथे शंसिषं हरी इति तिस्रो जगत्यः । त्रिकद्रुकेषु महिषो यवाशिरं प्रोष्वस्मै पुरोरथमिति तृचावातिच्छन्दसौ ६ पच्छःपूर्वं द्वेधाकारं ७ उत्तर-मनुष्टुब्गायत्रीकारं ८ प्रचेतन प्रचेतयायाहि पिब मत्स्व । क्रतुश्छन्द ऋतं बृहत् सुन्न आधेहि नो वसवित्यनुष्टुप् । प्र प्र वस्त्रिष्टुभमिषमर्चत प्रार्चतयोव्यर्तीं रफाणयदिति तृचा आनुष्टुभाः ९ उत्तमस्योत्तमां शिष्ट्वोत्तमां निविदन्दध्यात् १० लिङ्गैः पदानुपूर्वं व्याख्यास्यामो मत्सदहिं वृत्रमपां जिन्वदुदार्यमुद्यान् दिवि समुद्रं पर्वता इह ११ उद्यद्ब्रध्नस्य विष्टपमिति परिधानीया ।

एवाह्येवैवाहीन्द्र३ । एवाहि शक्रो वशी हि शक्र इति जपित्वा । अपाः पूर्वेषां हरिवः सुतानामिति यजति १२ २

विहृतस्येन्द्र जुषस्व प्रवहायाहि शूर हरी इह । पिबा सुतस्य मतिर्न मध्वश्चकानश्चारुर्मदाय । इन्द्र जठरं नव्यं न पृणस्व मधोर्दिवो न । अस्य सुतस्य स्वर्णोप त्वा मदाः सुवाचो अस्थुः । इन्द्रस्तुराषाणिमत्रो न जघान वृत्रं यतिर्न । बिभेद बलं भृगुर्न ससाहे शत्रून्मदे सोमस्य । श्रुधीहवं न इन्द्रो न गिरो जुषस्व वज्री न । इन्द्र सयुग्भिर्दिद्युन्नमत्स्वामदाय महेरणाय । आ त्वा विशन्तु कविर्न सुतास इन्द्र त्वष्टा न । पृणस्व कुक्षी सोमो नाविड्ढि शूरधिया हि या नः । साधुर्न गृध्नुर्नृभुर्नास्तेव शूरश्रमसो न । यातेव भीमो विष्णुर्न त्वेषः समत्सुक्रतुर्नेति स्तोत्रियानुरूपौ १ ऊर्ध्वं स्तोत्रियानुरूपाभ्या-न्तदेव शस्यं विहरेत् २ पादान् व्यवधायाधर्चशः शंसेत् ३ पूर्वासां पूर्वाणि पदानि ४ गायत्र्यः पङ्क्तिभिः ५ पंक्तीनां तु द्वे द्वे पदे शिष्येते ताभ्यां प्रणुयात् ६ उष्णिहो बृहतीभिरुष्णिहान्तूत्तमान् पादान् द्वौ कुर्य्यात् ७ चतुरक्षरमाद्यं ८ द्विपदाश्चतुर्धा कृत्वा प्रथमां त्रिष्टुभोत्तरा जगतीभिः ९ उत्तमायाश्चतुर्थम-क्षरमन्त्यं पूर्वस्याद्यमुत्तरस्य १० द्वितीयतृतीययोस्तृतीययोः पादयोरवसानत उपदध्यात् । प्रचेतनेति पूर्वस्यां प्रचेतयेत्युत्तरस्यां ११ उत्तरास्वितरान् पादान् षष्ठान् कृत्वाऽनुष्टुप्कारं शंसेत् १२ ऊर्ध्वं स्तोत्रियानुरूपाभ्यामातो विहृतः १३ तत्र प्रतिगर ओथामो दैवमदे मदामो दैवोमथेति १४ याज्यां जपेनोपसृजेत् १५ एवाह्येवापाः पूर्वेषां हरिवः सुतामेवाहीन्द्राँ अथो इदं सवनं केवलन्ते । एवा हि शक्रो मम द्विसोमं मधुमन्तमिन्द्रवशीहि शक्रः सत्रावृषन् जठर आवृषस्वेति १६ समानमन्यत् १७ स्तोत्रियाय निविदे परिधानीयाया इत्याहावः १८ आहुतं षोडशिपात्रं समुपहावं भक्षयन्ति १९ घर्मे च भक्षिणः २० मैत्रावरुणस्त्रयश्छन्दोगाः २१ इन्द्र षोडशिन्नोजस्विंस्त्वन्देवेष्वस्योजस्व-न्तमामायुष्मन्तं वर्च स्वन्तं मनुष्येषु कुरु । तस्य त इन्द्रपीतस्यानुष्टुप्छन्दस उपहूतस्योपहूतो भक्षयामीति भक्षजपः २२ ३

अतिरात्रे पर्यायाणामुक्तः शस्योपायो होतुरपि यथा होत्रकाणां १ प्रथमे पर्याये

होतुराद्यां वर्जयित्वा प्रत्यृचं स्तोत्रियानुरूपेषु प्रथमानि पदानि द्विरुक्त्वाऽवस्यन्ति २ शिष्टे समसित्वा प्रणुवन्ति ३ सर्वे सर्वासां मध्यमे मध्यमानि प्रत्यादाय ऋगन्तैः प्रणुवन्ति ४ उत्तमान्युत्तमे ५ चतुरक्षराणि त्वछावाकः ६ चतुःशस्त्राः पर्यायाः ७ होतुराद्यं ८ याज्याभ्यः पूर्वे पर्यासाः ९ पान्तमा वो अन्धसोपादुशिप्रयन्धसस्त्यमु वः सत्रासाहमिति सूक्तशेषोऽभित्यं मेषमध्वर्यवो भरतेन्द्राय सोममिति याज्या । प्र व इन्द्राय मादनं प्रकृतान्यृजीषिणः प्रतिश्रुताय वो धृषदिति पञ्चदश दिवश्चिदस्येति पर्यासः स नो नव्येभिरिति चास्य मदे पुरुवपांसि विद्वानिति याज्या । वयमु त्वा ददिदर्था वयमिन्द्रत्वाय वोऽभिवार्त्रहत्यायेत्युत्तमामुद्धरेदिन्द्रो अङ्ग महद्भयमभिन्यूषु वावमप्सु धूतस्य हरिवः पिबेहेति याज्या । इन्द्राय मद्वने सुतमिन्द्रमिद्गाथिनो बृहदेन्द्रसानसिमेतोऽन्विन्द्र स्तवामेशानं मा नो अस्मिन् मघवन्निन्द्र पिब तुभ्यं सुतो मदायेति याज्या । अयन्त इन्द्र सोमोऽयन्ते मानुषे जन उद्धेदभीत्युत्तमामुद्धरेदहं भुवमपाय्यस्यान्धसो मदायेति याज्या । आतून इन्द्र क्षुमन्तमा प्रद्रव परावतो न ह्यन्यं बडाकरमित्यष्टावींखयन्तीरहन्दां पाता सुतमिन्द्रो अस्तु सोमं हन्ता वृत्रमिति याज्या । अभि त्वा वृषभा सुतेऽभि प्र गोपतिङ्गिरातून इन्द्रमद्र्यगितिसूक्ते अश्वावतिप्रोग्रां पीतिं वृष्ण इयर्मि सत्यामिति याज्या । इदं वसो सुतमन्ध इन्द्रेहि मत्स्यन्धसः प्र सम्राजमुपक्रमस्वाभर धृषता तदस्मै नव्यमस्य पिब यस्य जज्ञान इन्द्रेति याज्या । इदं ह्यन्वोजसा महाँ इन्द्रो य ओजसा समस्य मन्यवे विश इति द्विचत्वारिंशद्विश्वजिते तिष्ठाहरीरथ आयुज्यमानेति याज्या । आत्वेता निषीदता त्वशत्रवागहि नकिरिन्द्र त्वदुत्तर इत्युत्तमामुद्धरेच्छ्रत्ते दधामीदन्त्यत् यत् पात्रमिन्द्रपानमिति याज्या । योगे योगे तव स्तरं युजन्ति ब्रध्नमरुषं यदिन्द्राहं प्रतेमह ऊती शची वस्तव वीर्येणेति याज्या । इन्द्रः सुतेषु सोमेषु य इन्द्र सोमपातम आद्या ये अग्निमिन्धत इति सप्तदश य इन्द्र चमसेष्वा सोमः प्र वः सतां प्रोद्रोणे हरयः कर्माग्मनिनि याज्या १० इति पर्यायाः ११ पर्यासवर्जं गायत्राः १२ ४

संस्थितेष्वाश्विनाय स्तुवते १ शंसिष्यन् विसंस्थितसञ्चरेण निष्क्रम्याग्नीध्रीये जान्वाच्याहुतीर्जुहुयात् । अग्निरज्वी गायत्रेण छन्दसा तमश्यान्तमन्वारभे तस्मै

मामवतु तस्मै स्वाहा । उषा अज्विनी त्रैष्टुभेन छन्दसा तामश्यान्तामन्वारभे तस्मै मामवतु तस्मै स्वाहा । अश्विनावज्विनौ जागतेन छन्दसा तावश्यान्तावन्वारभे ताभ्यां मामवतु ताभ्यां स्वाहा । बरामहाँ असि सूर्येति द्वाभ्यामिन्द्र वो विश्वतस्परीति च २ प्राश्याज्यशेषमप उपस्पृशेन्नाचामेद्विज्ञायते देवरथो वा एष यद्धोता नात्त्मद्भिः करवाणीति ३ प्राश्य प्रतिप्रसृप्य पश्चात् स्वस्य धिष्णस्योपविशेत् समस्तजङ्घोरुररत्निभ्यां जानुभ्यां चोपस्थं कृत्वा यथा शकुनिरुत्पतिष्यन् ४ उपस्थकृतस्त्वेवाश्विनं शंसेत् ५ अग्निर्होता गृहपतिः स राजेति प्रतिपदेकपातिनी पच्छः ६ एतयाऽऽग्नेयं गायत्रमुपसन्तनुयात् ७ प्रातरनुवाकन्यायेन तस्यैव समाम्नायस्य सहस्त्रावममोदेतोः शंसेत् ८ बार्हतास्त्रयस्तृचा स्तोत्रियाः प्रगाथा वा तान् पुरस्तादनुदैवतं स्वस्य छन्दसो यथास्तुतं शंसेत् ९ येषु वान्येषु १० पच्छो द्विपदाः ११ उपसन्तनुयादेकपदाः १२ ताभ्यश्चोत्तराः १३ विच्छन्दस उद्धरेत् १४ अपि वा तन्नयायेन शंसनं १५ न तु पच्छोऽन्यास्त्रिष्टुब्जगतीभ्यः १६ पाङ्क्तेनोदिते सौर्याणि प्रतिपद्यते १७ सूर्यो नो दिव उदु त्यं जातवेदसमिति नव चित्रं देवानां नमो मित्रस्येन्द्र क्रतुं न आभराभित्वा शूर नोनुमो बहवः सूरचक्षस इति प्रगाथा मही द्यौः पृथिवी च नस्ते हि द्यावापृथिवी विश्वशम्भुवा । विश्वस्य देवोमृचयस्य जन्मनोऽनया रोषातिनग्रभदिति द्विपदा १८ बृहस्पते अतियदर्यो अर्हादिति परिधानोया १९ प्रतिपदे परिधानीयाया इत्याहावः २० बृहत् साम चेत् तस्य योनिं प्रगाथेषु द्वितीयां तृतीयां वा २१ न वा २२ आश्विनेन ग्रहेण सपुरोडाशेन चरन्ति २३ इमे सोमासस्तिरो अह्नयासस्तीव्रास्तिष्ठन्ति पीतये युवभ्यां । हविष्मता नासत्या रथेनायातमुपभूषतं पिबध्या इत्यनुवाक्या । होता यक्षदश्विना सोमानां तिरो अह्नयानामिति प्रैषः । प्र वामन्धांसि मद्यान्यस्तुरुभा पिबतमश्विनेति याज्ये अध्यर्धामनवानं २४ यद्येतस्य पुरोडाशस्य स्विष्टकृता चरेयुः । पुरोडा अग्ने पचतोऽग्ने वृधान आहुतिमिति संयाज्ये २५ ५

यदि पर्यायानभिव्युच्छेत् सर्वेभ्य एकं सम्भरेयुः १ प्रथमाद्धोता द्वितीयान्मैत्रावरुणो ब्राह्मणाच्छंसी चोत्तमादच्छावाकः २ द्वौ चेत् द्वौ प्रथमात् द्वा उत्तमात्

३ अपि वा सर्वे स्युः स्तोमनिर्ह्रस्ताः ४ ऊर्ध्वं स्तोत्रियानुरूपेभ्यः प्रथमोत्तमांस्तृचाञ्छंसेयुः ५ निर्ह्रास एवैकस्मिन् ६ होतृवर्जमित्येके ७ आश्विनायैकस्तोत्रियोऽग्ने विवस्वदुषस इति ८ तं पुरस्तादनुदैवतं स्वस्य छन्दसो यथास्तुतं शंसेत् ९ त्रीणि षष्टिशतान्याश्विनं १० विमतानां प्रसवसन्निपाते संसवोऽनन्तर्हितेषु नद्या वा पर्वतेन वा ११ अप्येकेऽन्तर्हितेष्वपि १२ तथा सति सन्त्वरा देवतावाहनात् १३ कयाशुभेति च मरुत्वतीये पुरस्तात् सूक्तस्य शंसेत् १४ यो जात एवेति निष्केवल्ये १५ ममाग्ने वर्च इति वैश्वदेवसूक्तस्य १६ अपि वैतेष्वेव निविदो दध्यादुद्धरेदितराणि १७ स्थानं चेन्निविदोऽतिहरेन्मा प्रगामेति पुरस्तात् सूक्तं शस्त्वाऽन्यस्मिंस्तद्दैवते दध्यात् १८ ६

सोमातिरेके स्तुतशस्त्रोपजनः १ प्रातःसवनेऽस्ति सोमो अयं सुतो गौर्धयति मरुतामिति स्तोत्रियानुरूपौ । महाँ इन्द्रो य ओजसाऽऽतो देवा अवन्तु न इत्यैन्द्रीभिर्वैष्णवीभिश्च स्तोममतिशस्यैन्द्र्या यजेत् २ वैष्णव्या वा ३ ऐन्द्रावैष्णव्येति गाणगारिर्दैवतप्रधानत्वात् ४ सं वां कर्मणा समिषा हिनोमीति ५ माध्यन्दिने बण्महाँ असि सूर्योदु त्यद्दर्शतं वपुरिति प्रगाथौ स्तोत्रियानुरूपौ । महाँ इन्द्रो नृवद्विष्णोर्नुकं या विश्वासां जनितारा मतीनामिति याज्या ६ तृतीयसवन उत्तरोत्तरां संस्थामुपेयुराऽऽतिरात्रात् ७ अतिरात्राच्चेत् प्र तत्ते अद्य शिपिविष्ट नाम प्र तद्विष्णुस्तव ते वीर्येणेति स्तोत्रियानुरूपौ । माध्यन्दिनेन शेषः ८ त्वेषमित्थास मरणं शिमीवतोरिति वा याज्या ९ ७

क्रीते राजनि नष्टे दग्धे वा १ अपिदधानि सदो हविर्धानान्यनावृता क्रियेरन् २ आवृता वा ३ अन्यं राजानमभिषुणुयुः ४ अनधिगमे पूतीकान् फाल्गुनानि ५ अन्या वा ओषधयः पूतीकैः सह ६ प्रायश्चित्तं वा हुत्वोत्तरमारभेत ७ सुत्यासूक्तमेव मन्येत ८ प्रतिधुक् प्रातःसवने ९ शृतं माध्यन्दिने १० दधि तृतीयसवने ११ श्रायन्तीयं ब्रह्म साम यदि फाल्गुनानि वारवन्तीयं यज्ञायज्ञीयस्य स्थाने १२ श्रायन्तीयमेके १३ एकदक्षिणं यज्ञं संस्थाप्योदवसाय पुनर्यजेत १४ तस्मिन् पूर्वस्य दक्षिणा दद्यात् १५ सोमाधिगमे प्रकृत्या १६ ८

दीक्षितानामुपतापे परिहिते प्रातरनुवाकेऽनुपाकृते वा पुष्टिपते पुष्टिश्चक्षुषे चक्षुः प्राणाय प्राणं त्मने त्मानं वाचे वाचमस्मै पुनर्देहि स्वाहेति ब्रह्माहुतिं हुत्वा शीतोष्णा अपः समानीयैकविंशतिं तासु यवान् कुशपिञ्जूलांश्चावधाय ताभिरद्भिरबर्थं कुर्वीत ताभिरेनमाप्लावयेज्जीवानामस्थता३ । इमममुञ्जीवयत जीविकानामस्थता३ । इमममुञ्जीवयत सञ्जीवानामस्थता३ । इमममुं सञ्जीवयत सञ्जीविकानामस्थता३ । इममुं सञ्जीवयतेत्यौषधिसूक्तेन च १ आप्लाव्यानुमृजेत् २ उपांश्वन्तर्यामौ ते प्राणापानौ पातामसा उपांशुसवनस्ते व्यानं पात्वसावैन्द्रवायवस्ते वाचं पात्वसौ मैत्रावरुणस्ते चक्षुषी पात्वसावाश्विनस्ते श्रोत्रं पात्वसावाग्रयणस्ते दक्षक्रतू पात्वसा उक्थस्तेऽङ्गानि पात्वसौ ध्रुवस्त आयुः पात्वसाविति ३ यथासनमनुपरिक्रमणं ४ त्रातारमिन्द्रमवितारमिन्द्रमिति तार्क्ष्यादिः ५ यद्यप्यन्यदैकाहिकाद्वैश्वदेवं स्वस्त्यात्रेये निविदं दध्यात् ६ प्रकृत्याऽगदे ७ ९

संस्थितेऽतीर्थेन निर्हृत्यावभृथे प्रेतालङ्कारान् कुर्वन्ति १ केशश्मश्रुलोमनखानि वापयन्ति २ नलदेनानुलिम्पन्ति ३ नलदमालां प्रतिमुञ्चन्ति ४ निःपुरीषमेके कृत्वा पृषदाज्यं पूरयन्ति ५ अहतस्य वाससः पाशतः पादमात्रमवच्छिद्य प्रोर्णुवन्ति प्रत्यग्दशेनाऽऽविःपादं ६ अवच्छेदमस्य पुत्रा अमाकुर्वीरन् ७ अग्नीनस्य समारोप्य दक्षिणतो बहिर्वेदि दहेयुः ८ आहायणानाहिताग्निं ९ पत्नीञ्च १० प्रत्येत्याहः समापयेयुः ११ प्रातरनभ्यासमनभिहिंकृतानि शस्त्रानुवचनाभिष्टवनसंस्तवनानि १२ पुरा ग्रहग्रहणात् तीर्थेन निष्क्रम्य त्रिःप्रसव्यमायतनं परीत्य पर्युपविशन्ति १३ पश्चाद्धोता १४ उत्तरोऽध्वर्युः । तस्य पश्चाच्छन्दोगाः १५ आयङ्गौः पृश्निरक्रमीदित्युपांशु स्तुवते १६ स्तुते होता प्रसव्यमायतनं परिव्रजन् स्तोत्रियमनुद्रवेदप्रणुवन् १७ यामीश्च १८ प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति पञ्चानां तृतीयमुद्धरेत् । मैनमग्ने विद होमाभिशोच इति षट् । पूषा त्वेतश्च्यावयतु प्र विद्वानिति चतस्र उपसर्प मातरं भूमिमेतामिति चतस्रः सोम एकेभ्यः १९ उरूणसा वसुतृपा उदुम्बलाविति च समाप्य । सञ्चित्य तीर्थेन प्रपाद्य यथासनमासादयेयुः २० भक्षेषु प्राणभक्षान्

भक्षयित्वा दक्षिणे मार्जालीये निनयेयुः । दक्षिणस्यां वा वेदिश्रोण्यां २१ सप्तदशमहर्भवति त्रिवृतः पवमाना रथन्तरपृष्ठोऽग्निष्टोमः २२ संस्थितेऽवभृथमेके गमयन्त्येतस्यैतदहरभिशब्दयन्तः २३ निर्मन्थ्येन वा दग्ध्वा निखाय संवत्सरादेनमग्निष्टोमेन याजयेयुः २४ नेदिष्ठिनं वा दीक्षयेयुः २५ अपि वोत्थानं गृहपतौ २६ उक्तः स्तुतशस्त्रविकारः २७ एकाहेषु यजमानासने शयीत २८ संस्थितेऽपायतीष्ववभृथं गमयेयुरित्यालेखनः २९ पूर्वेण सदो दहेयुरित्याश्मरथ्यः ३० एष एवावभृथः ३१ १०

अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति संस्थाः १ तासां यामुपयन्ति तस्या अन्ते यज्ञपुच्छं २ अनुयाजाद्युक्तं पशुनाशं युवाकात् ३ उत्तमस्त्विह सूक्तवाकप्रैषः ४ अवीवृधतेति पुरोडाशदेवतां ५ एके यदि सवनीयस्य पशोः पशुपुरोडाशं कुर्युरवीवृधेतां पुरोडाशैरित्येव ब्रूयात् ६ सवनीयैरेवेन्द्रो वर्धते पशुपुरोडाशेन पशुदेवता ७ ऊर्ध्वं शंयुवाकाद्धारियोजनः ८ अपाः सोममस्तमिन्द्र प्रयाहि धाना सोमानामिन्द्राद्धि च पिब च युनज्मि ते ब्रह्मणा केशिना हरी इति ९ इज्यानुवाक्ये अन्त्येष्वहःसु १० तिष्ठासुकं मघवन्मा परागा अयं यज्ञो देवया अयं मियेध इतीतरेषु ११ परायाहि मघवन्ना च याहीति वाऽनुवाक्योत्तरवत्स्वहःसु १२ अननुवषट्कृतेऽतिप्रैषं मैत्रावरुण आहेह मद एव मघवन्निन्द्र तेऽश्व इति १३ अद्येत्यतिरात्रे १४ अद्य सुत्यामिति च १५ तस्यान्तं श्रुत्वाऽऽग्नीध्रः श्वःसुत्यां प्राह श्वःसुत्यां वा एषां ब्राह्मणानां तामिन्द्र येन्द्राग्निभ्यां प्रब्रवीमि मित्रावरुणाभ्यां वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सौम्येभ्यः सोमपेभ्यो ब्रह्मन् वाचं यच्छेति १६ ११

आहृतमुन्नेत्रा द्रोणकलशमिडामिव प्रतिगृह्योपहवमिष्ट्वाऽवेक्षेत १ हरिवतस्ते हारियोजनस्य स्तुतस्तोमस्य शस्तोक्थस्येष्टयजुषो यो भक्षो गोसनिरश्वसनिस्तस्य त उपहूतस्योपहूतो भक्षयामीति प्राणभक्षं भक्षयित्वा प्रतिप्रदाय द्रोणकलशमात्मानमाप्याय्य यथाप्रसृप्तं विनिसृप्याग्नीध्रीये विनिसृप्ताहुती जुह्वत्ययं पीत इन्दुरिन्द्रं मदेधादयं विप्रो वाचमर्चन्नियच्छन् । अयं कस्य-

चिद्द्रुहतादभीके सोमो राजा न सखायं रिषेधात् स्वाहा । इदं राधो अग्निना दत्तमागाद्यशोभर्गः सह ओजो बलञ्च । दीर्घायुत्वाय शतशारदाय प्रतिगृभ्णाभिमहते वीर्याय स्वाहेति २ आहवनीये षट् षट् शकलान्यभ्यादधति । देवकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । आत्मकृतस्यैनसोऽवयजनमसि स्वाहा । एनस एनसोऽवयजनमसि स्वाहा । यद्वो देवाश्चकृम जिह्वया गुर्विति च ३ द्रोणकलशाद्धाना गृहीत्वाऽवेक्षेरन्नापूर्याऽस्थामापूरयत प्रजया च धनेन च । इन्द्रस्य कामदुघाः स्थ कामान् मे धुङ्ध्वं प्रजाञ्च पशूंश्चेति ४ अवघ्रायान्तःपरिधिदेशे निवपेयुः ५ प्रत्येत्य तीर्थदेशेऽपां पूर्णाश्चमसास्तान्त्सव्यावृतो व्रजन्ति ६ हरिततृणानि विमृज्य प्रतिस्वञ्चमसेभ्यस्त्रिः प्रसव्यमुदकैरात्मनः पर्युक्षन्ते दक्षिणैः पाणिभिः ७ इतरैर्वा प्रदक्षिणं ८ स्वधा पित्रे स्वधा पितामहाय स्वधा प्रपितामहायेति ९ उक्तं जीवमृतेभ्यः १० पाणींश्चमसेष्ववधायाप्सु धूतस्य देव सोम ते मतिविदो नृभिः सुतस्य स्तुतस्तोमस्य शस्तोक्थस्येष्टयजुषो यो भक्षो गोसनिरश्वसनिस्तस्य त उपहूतस्योपहूतो भक्षयामीति प्राणभक्षान् भक्षयित्वा माऽहं प्रजां परासिचमित्येतेनाभ्यात्मं निनीयाच्छायं वो मरुतः श्लोक एत्वित्येतयाऽभिमृशन्ति ११ दधिक्राब्णो अकारिषमित्याग्नीध्रीये दधिद्रप्सान् प्राश्य सख्यानि विसृजन्ते । उभा कवी युवाना सत्यादा धर्मणस्पती । परिसत्यस्य धर्मणा विसख्यानि सृजामह इति १२ १२

पत्नीसंयाजैश्चरित्वाऽवभृथं व्रजन्ति १ व्रजन्तः साम्नो निधनमुपयन्ति २ अवभृथेष्ट्या तिष्ठन्तश्चरन्ति ३ प्रयाजाद्यनुयाजान्ता नास्यामिडा न बर्हिष्मन्तौ प्रयाजानुयाजावप्सुमन्तौ ४ गायत्रौ ५ वारुणं हविः ६ अव ते हेडो वरुण नमोभिरिति द्वे । अग्नीवरुणौ स्विष्टकृदर्थे ७ त्वन्नो अग्ने वरुणस्य विद्वानिति द्वे । संस्थितायां पादानुदकान्तेऽवदध्यर्नमो वरुणायाभिष्ठितो वरुणस्य पाश इति ८ तत आचामन्ति भक्षस्यावभृथोऽसि भक्षितस्यावभृथोऽसि भक्षं कृतस्यावभृथोऽसीति ९ प्रोथ्य प्रथमेन प्रष्ठीवन्ति प्रगिरन्त्युत्तराभ्यां १० तत आचम्याप्लवन्त आपो अस्मान् मातरः शुन्धयन्त्विदमापः प्रवहत सुमित्र्या न

आप ओषधयः सन्त्विति ११ एतयाऽऽवृताऽभ्युन्नेरन्नेव वाप्यदीक्षिताः १२ उन्नेतैनानुन्नयति १३ उन्नेतरुन्नोन्नयोन्नेतर्वस्वो अभ्युन्नयान इत्युन्नीयमाना जपन्ति १४ उद्वयन्तमसस्परीत्युदेत्य १५ समानमत ऊर्ध्वं हृदयशूलेनासंस्थाजपात् १६ संस्थाजपेनोपतिष्ठन्ते ये येऽपवृत्तकर्माणः १७ १३

गार्हपत्य उदयनीयया चरन्ति १ सा प्रायणीययोक्ता २ पथ्या स्वस्ति-रिहोत्तमाज्यहविषां ३ विपरीताश्च याज्यानुवाक्याः ४ ते चैव कुर्युर्ये प्रायणीयां ५ प्रकृत्या संयाज्ये ६ संस्थितायां मैत्रावरुण्यनूबन्ध्या ७ सदस्येके ८ उत्तरवेद्यामेके ९ हुतायां वपायां यद्येकादशिन्यग्रतः कृताऽग्नीषोमीयेण सञ्चरेण व्रजित्वा गार्हपत्ये त्वाष्ट्रेण पशुना चरन्ति १० अञ्जनादि पर्यग्नि कृत्वो-त्सृजन्त्यपुनरायनाय ११ यदि त्वध्वर्यव आज्येन समाप्नुयुस्तथैव होता कुर्यात् १२ सम्प्रैषवदादेशान् १३ पशुवन्निपातान् १४ यद्यनूबन्ध्ये पशुपुरोडाश-मनुदेविकाहवींषि निर्वपेयुर्धातानुमती राका सिनीवाली कुहूः १५ धाता ददातु दाशुषे प्राचीं जीवातुमक्षितां । वयं देवस्य धीमहि सुमतिं वाजिनीवतः । धाता प्रजानामुत राय ईशे धातेदं विश्वं भुवनं जजान । धाता कृष्टी-रनिमिषाभिचष्टे धात्र इद्धव्यं घृतवज्जुहोतेति १६ देवीनां चेत् सूर्यो द्यौरुषा गौः पृथिवी १७ स्मत्पुरन्धिर्न आगहीति द्वे आद्यान्तनोषि रश्मिभिरावहन्ती पोष्यावार्याणि न ता अर्वारेणुककाटो अश्नुते न तानशन्ति न दभातितस्वरो बडित्था पर्वतानां दृड्हा चिद्या वनस्पतीन् १८ पश्वलाभे पयस्या मैत्रावरुण्यनूबंध्यास्थाने १९ आज्यभागप्रभृतिवाजिनान्ता २० कर्मिणो वाजिनं भक्षयेयुः २१ सर्वे तु दीक्षिताः २२ सर्वे तु दीक्षितोत्थिताः पृथगग्नीन् समारोप्योदग्देवयजनान्मथित्वोदवसानीयया यजन्ते २३ पौनराधेयिक्यविकृताऽविकृता २४ १४

## आश्वलायनीये श्रौतसूत्रे
## उत्तरार्द्धम्

सत्राणां १ उक्ता दीक्षोपसदः २ एतेनाह्ना सुत्यानि ३ प्रातरनुवाका-द्युदवसानीयान्तान्यन्त्यानि ४ पत्नीसंयाजान्तानीतराणि ५ द्रप्सप्राशन-

र्व्यविसर्जने त्वन्त्य एव ६ ध्रुवाः शस्त्राणामातानाः ७ सूक्तान्येव सूक्त-स्थानेष्वहीनेषु ८ दैवतेन व्यवस्थाः ९ तृचाः प्रउगे १० सर्वाहर्गणेषु तायमानरूपाणां प्रथमादह्नः प्रवर्त्तेते अभ्यासातिप्रैषौ ११ अह्न उत्तमे शस्त्रे परिधानीयाया उत्तमे वचन उत्तमं चतुरक्षरं द्विरुक्त्वा प्रणुयात् १२ द्वितीयादिषु त्यमूषु वाजिनन्देवजूतमिति तार्क्ष्यमग्रे निष्केवल्यसूक्तानां १३ जातवेदसे सुनवाम सोममित्याग्निमारुते जातवेदस्यानां १४ आरम्भणीयाः पर्यासान् कद्वतोऽहरहःशस्यानीति होत्रका द्वितीयादिष्वेव १५ तानि सर्वाणि सर्वा-त्रान्यत्राह्न उत्तमात् १६ वैकल्पिकान्यग्निष्टोमेऽहर्गणमध्यगते १७ अग्नि-ष्टोमायनेषु वा १८ अन्यान्यभ्यासातिप्रैषाभ्यामिति कौत्सो विकृतौ तद्गुण-भावात् १९ नित्यानि होतुरिति गौतमः सङ्घातादावनुप्रवृत्तत्वादच्युत-शब्दत्वाच्च २० होत्रकाणामपि गाणगारिर्नित्यत्वात्सत्रधर्मान्वयस्य २१ प्रगाथतृचसूक्तागमेष्वैकाहिकं तावदुद्धरेत् २२ १

चतुर्विंशे होताऽजनिष्टेत्याज्यं १ आ नो मित्रावरुणा मित्रं वयं हवामहे मित्रं हुवे पूतदक्षमयं वां मित्रावरुणा पुरूरुणा चिद्धयस्ति प्रति वां सूर उदित इति षडहस्तोत्रिया मैत्रावरुणस्य २ आयाहि सुषुमाहित इन्द्रमिद्गाथिनो बृहदिन्द्रेण सं हि दृक्षस आदह स्वधामन्वित्येका द्वे चेन्द्रो दधीचो अस्तुभिरुत्तिष्ठन्नोजसा सह भिंधि विश्वा अपद्विष इति ब्राह्मणाच्छंसिनः ३ इन्द्राग्नी आगतं सुतमिन्द्रे अग्ना नमो बृहत्ता हुवे ययोरिदमियं वामस्य मन्मन इन्द्राग्नी युवामिमे यज्ञस्य हि स्थ ऋत्विजेत्यच्छावाकस्य ४ तेषां यस्मिंस्तुवीरन्त्स स्तोत्रियः ५ यस्मिंच्छ्रवः सोऽनुरूपः ६ एकस्तोत्रियेष्वहःसु योऽन्योऽनन्तरः सोऽनुरूपो न चेत् सर्वोऽहर्गणः षडहो वा ७ ऐकाहिकस्तथा सति ८ अन्त्ये च ९ ऊर्ध्वमनुरूपेभ्य ऋजुनीनिनो वरुण इन्द्रं वो विश्वतस्परि यत् सोम आसुते नर इत्यारम्भणीयाः शस्त्वा स्वान्त्स्वान् परिशिष्टानावपेरंश्चतुर्विंशमहाव्रताभि-जिद्विश्वजिद्विषुवत्सु १० सर्वस्तोमसर्वपृष्ठेषु च ११ ऊर्ध्वमावापात् प्रति वां सूर उदिते व्यन्तरिक्षमतिरत्थ्या वाश्वस्य सुन्वत इति तृचाः पर्यासाः १२ स त्वेव मैत्रावरुणस्य षडहस्तोत्रिय उत्तमः सपर्यासः १३ तद्दैवतमन्यं पूर्वस्य स्थाने कुर्वीत १४ अन्यत्रापि सन्निपातेन तृचं सूक्तं वाऽनन्तर्हितमेकासने द्विः-

शंसेत् १५ महावालभिदं चेच्छंसेदूर्ध्वमनुरूपेभ्य आरम्भणीयाभ्यो वा नाभाकांस्तृचानावपेरन् गायत्रीकारं १६ सत्तपः परिषस्वज इति मैत्रावरुणो यः ककुभो निधारय इति वा पूर्वीष्ट इन्द्रोपमातय इति ब्राह्मणाच्छंसी ता हि मध्यंभराणामित्यच्छावाकः १७ २

मरुत्वतीये प्रैतु ब्रह्मणस्पतिरुत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणस्पत्या वाऽऽवपते पूर्वौ नित्यात् १ बृहदिन्द्राय गायत नकिः सुदासो रथमिति मरुत्वतीया ऊर्ध्वं नित्यात् २ कया शुभेति च मरुत्वतीये पुरस्तात् सूक्तस्य शंसेत् ३ एवं स्थितान् प्रगाथान् पृष्ठ्याभिप्लवयोरन्वहं पुनः पुनरावर्त्तयेयुः ४ एकैकं ब्राह्मणस्पत्यानां ५ एवं मरुत्वतीयानां ६ ध्रुव इन्द्रनिहवः ७ धाय्याश्च ८ बृहत् पृष्ठं ९ रथन्तरं वा १० तयोरक्रियमाणस्य योनिं शंसेत् ११ वैरूप-वैराजशाक्वररैवतानाञ्च १२ पृष्ठ्यस्तोत्रिया योन्यः १३ अर्धर्चाः १४ तासां विधानमन्वहं १५ ताभ्य ऊर्ध्वं सामगाथान् १६ उक्तो रथन्तरस्य १७ उभयं शृणवच्च न इति बृहतः १८ इन्द्र त्रिधातु शरणं त्वमिन्द्रं प्रतूर्त्तिषु मोषु त्वा वाघतश्च नेति सद्विपद उपसमस्येद् द्विपदामिन्द्रमिद्देवतातय इतीतरेषां १९ पृष्ठ्य एवैकैकमन्वहं २० तदिदासेति च पुरस्तात् सूक्तस्य शंसेत् २१ उक्थपात्रं चमसांश्चान्तरातिग्राह्यान् भक्षयन्ति निष्केवल्ये २२ नित्यो भक्षजपः २३ षोडशिपात्रेण भक्षिणः २४ ३

होत्रकाणां १ कया नश्चित्र आभुवत् कया त्वं न ऊत्या माचिदन्यद्विशंसत यच्चिद्धि त्वा जना इम इति स्तोत्रियानुरूपा मैत्रावरुणस्य २ तं वोदस्ममृती-षहन्तत्वायामि सुवीर्यमभिप्रवः सुराधसं प्रसुश्रुतं सुराधसं वयं घत्वा सुता-वन्तः कईं वेद सुते सचा विश्वाः पृतना अभिभूतरं नरं तमिन्द्रं जोहवीमि या इन्द्र भुज आभर इत्येका द्वे चेन्द्रो मदाय वावृधे मदे मदे हि नो ददिः सुरूपकृत्नुमूतये शुष्मिन्तमन्न ऊतये श्रायन्त इव सूर्यं बण्महाँ असि सूर्योदु त्यद्दर्शतं वपुरुदुत्ये मधुमत्तमास्त्वमिन्द्र प्रतूर्त्तिषु त्वमिन्द्र यशा असीन्द्र क्रतुं न आभरेन्द्र ज्येष्ठं न आभरा त्वा सहस्रमा शतं मम त्वा सूर उदित इति ब्राह्मणाच्छंसिनः ३तरोभिर्वो विदद्वसुं तरणिरित्सिषासति त्वामिदाह्यो नरो

वयमेनमिदाह्यो यो राजा चर्षणीनां यः सत्राहा विचर्षणिः स्वादोरित्था विषूवत इत्था हि सोम इन्मद उभे यदिन्द्र रोदसी अव यत्त्वं शतक्रतो नकिष्टं कर्मणा न शन्न त्वा बृहन्तो अद्रय उभयं शृणवच्च न आवृषस्व पुरूवसो कदाचन स्तरीरसि कदाचन प्रयुच्छसि यत इन्द्र भयामहे यथा गौरो अपाकृतं यदिन्द्र प्रागपागुदग् यथा गौरो अपाकृतमित्यच्छावाकस्य ४ स्तोत्रियानुरूपाणां यद्यनुरूपे स्तुवीरन्त्स्तोत्रियोऽनुरूपः ५ ऊर्द्ध्वं स्तोत्रियानुरूपेभ्यः कस्तमिन्द्र त्वा वसुं कन्नव्यो अतसीनां कदून्वस्याकृतमिति कद्वन्तः प्रगाथाः ६ अपप्राच इन्द्र विश्वाँ अमित्रान् ब्रह्मणा ते ब्रह्मयुजा युनज्म्युरुन्नो लोकमनुनेषि विद्वानिति कद्वद्य आरम्भणीयाः ७ ऊर्ध्वमारम्भणीयाभ्यः सद्योहजात इत्यहरहः शस्यं मैत्रावरुणोऽस्मा इदु प्रतवसे शासद्वह्निरितीतरावहीनसूक्ते ८ आसत्यो यात्वित्यहीनसूक्तं द्वितीयं मैत्रावरुण उदु ब्रह्माण्यभितष्टे वेतीतरावहरहःशस्ये ९ नूनं सात इत्यन्तमुत्तमं १० अहीनसूक्तानि षडहस्तोत्रियानावपत्सु ११ उदुष्य देवः सविता हिरण्ययेति तिस्रस्ते हि द्यावापृथिवी यज्ञस्य वो रथ्यमिति वैश्वदेवं १२ पृक्षस्य वृष्णो वृष्णे शर्द्धाय यज्ञेन वर्द्धतेत्याग्निमारुतं १३ अग्निष्टोम इदमहः १४ उक्थ्यो वा १५ ४

अभिप्लवपृष्ठ्याहानि १ रथन्तरपृष्ठान्ययुजानि २ बृहत्पृष्ठानीतराणि ३ तृतीयादिषु पृष्ठ्यस्यान्वहं द्वितीयानि वैरूपवैराजशाक्वररैवतानि ४ तेषां यथास्थाने क्रियायां योनीः शंसेत् ५ सर्वत्र चास्वयोनिभावेऽन्यत्राश्विनात् ६ यज्ञायज्ञीयस्य त्वक्रियमाणस्यापि सानुरूपां योनिं व्याहावं शंसेदूर्ध्वमि- तरस्यानुरूपात् ७ होत्रकाः परिशिष्टानावापानुद्धृत्य ८ मित्रं वयं हवामहे मित्रं हुवे पूतदक्षमयं वां मित्रावरुणानो मित्रावरुणेति तृचाः प्र वो मित्रायेति चतुर्णां द्वितीयमुद्धरेत् प्र मित्रयोर्वरुणयोरिति षट् काव्येभिरदाभ्येति तिस्रो मित्रस्य चर्षणीधृत इति चतस्रो मैत्र्यो यच्चिद्धि ते विश इति वारुणं ९ एतस्य तृचमावपेत मैत्रावरुणो नित्यादधिकं स्तोमकारणात् १० पञ्च सप्तदशे । नवैकविंशे ऽ द्वादश चतुर्विंशे । पञ्चदश त्रिणवे । एकविंशतिं त्रयस्त्रिंशे । द्वात्रिंशतं चतुश्चत्वारिंशे । षट्त्रिंशतमष्टाचत्वारिंशे ११ एकाल्पीयसीर्वा १२ एकाहेष्वेकभूयसीर्वा १३ नारम्भणीया न पर्यासा अन्त्या ऐकाहिकास्तृचाः

पर्यासस्थानेषु १४ ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति षट् सूक्तानि १५ आवाप उक्तो मैत्रावरुणेन १६ इहेन्द्राग्नी इन्द्राग्नी आगतं ता हुवे ययोरिदमिति नवेयं वामस्य मन्मन इत्येकादश यज्ञस्य हि स्थ इत्यच्छावाकस्य १७ आयात्विन्द्रोऽवस इति मरुत्वतीयमान इन्द्र इति निष्केवल्यं प्रथमस्याभिप्लविकस्य १८ मध्यन्दिन इत्युक्त एते शस्त्रे प्रतीयात् १९ अहीनसूक्तस्थान एवा त्वामिन्द्र यन्न इन्द्र कथामहामिन्द्रः पूर्भिद्य एक इद्यस्तिग्मशृङ्ग इमामूष्विच्छन्ति त्वा शासद्वह्निरिति संपाताः २० एकैकस्य त्रयस्त्रयः २१ उक्ता मरुत्वतीयैः २२ युञ्जते मन इहेहव इति चतस्रो देवान् हुव इति वैश्वदेवं २३ ५

द्वितीयस्य चतुर्विंशेनाज्यं १ वायो ये ते सहस्रिण इति द्वे तीव्राः सोमास आगहीत्येको भा देवादि विस्पृशेति द्वे शुक्रस्याद्यगवाशिर इत्येकाऽयं वां मित्रावरुणेति पञ्च तृचाः २ गार्त्समदं प्रउगमित्येतदाचक्षते ३ विश्वानरस्य वस्पतिमिन्द्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ इन्द्र सोमं यात ऊतिरवमेति मध्यन्दिनः ४ भारद्वाजो होता चेत् प्रकृत्या ५ चातुर्विंशिकं तृतीयसवनं विश्वो देवस्य नेतुरित्येका तत् सवितुर्वरेण्यमिति द्वे आविश्वदेवं सप्ततिमिति तु वैश्वदेवस्य प्रतिपदनुचरौ ६ आज्यप्रउगे प्रतिदनचराश्चोभयोर्युग्मेष्वेवमभिप्लवे ७ ६

तृतीयस्य त्र्यर्यमा यो जात एवेति मध्यन्दिनः १ तद्देवस्य घृतेन द्यावापृथिवी इति तिस्रोऽनश्वो जातः परावतो य इति वैश्वदेवं वैश्वानराय धिषणां धारावरा मरुतस्त्वमग्ने प्रथमो अङ्गिरा इत्याग्निमारुतं चतुर्थस्योग्रो जज्ञ इति निष्केवल्यं २ ह्वयाम्यग्निमस्य मे द्यावापृथिवी इति तिस्रस्ततं मे अप इति वैश्वदेवं ३ वैश्वानरं मनसेति तिस्रः प्र ये शुम्भन्ते जनस्य गोपा इत्याग्निमारुतं ४ पञ्चमस्य कया शुभा यस्तिग्मशृङ्ग इति मध्यन्दिनः ५ कयाशुभीयस्य तु नवम्युत्तमाऽन्यत्रापि यत्र निविद्धानं स्यात् ६ घृतवती भुवनानामभिश्रियेन्द्र ऋभुभिर्वाजवद्भिरिति तृचौ कदु प्रियायेति वैश्वदेवं ७ पृक्षस्य वृष्णो वृष्णे शर्द्धाय नूचित् सहोजा इत्याग्निमारुतं षष्ठस्य सावित्रार्भवे तृतीयेन वैश्वानरीयञ्च कतरा

पूर्वोषासानन्तेति वैश्वदेवं प्रयज्यव इमं स्तोममित्याग्निमारुतं ८ इत्यभिप्लवः षडहः ९ तस्याग्निष्टोमावभितः । उक्थ्या मध्ये १० उक्थ्येषु स्तोत्रियानुरूपाः ११ मैत्रावरुणस्य १२ ७

एह्यूषु ब्रवाणि त आग्निरगामि भारतः प्र वो वाजा अभिद्यवोऽभि प्रयांसि वाहसा प्र मंहिष्ठाय गायत प्र सो अग्ने तवोतिभिरग्निं वो वृधन्तमग्ने यं यज्ञमध्वरं यजिष्ठं त्वाऽववृमहे यः समिधाय आहुत्याऽऽते अग्न इधीमह्युभेसुश्चन्द्रसर्पिष इति द्वे एका चाग्निं तं मन्ये यो वसुरा ते वत्सो मनो यमदाऽऽग्ने स्थूरं रयिं भर प्रेष्ठं वो अतिथिं श्रेष्ठं यविष्ठ भारत भद्रो नो अग्निराहुतो यदी घृतेभिराहुत आ घाये अग्निमिन्धत इमा अभिप्रणोनुम इति १ अथ ब्राह्मणाच्छंसिनोऽभ्रातृव्यो अनात्वं मा ते अमाजुरो यथैवाह्यसि वीरयुरेवाह्यस्य सूनृता तन्ते मदं गृणीमसि तम्वभि प्रगायत वयमु त्वामपूर्व्य यो न इदमिदं पुरेन्द्राय साम गायत सखाय आशिषामहि य एक इद्विदयते य इन्द्र सोमपातम एन्द्र नो गध्येदु मध्वो मदि-न्तरमेतो न्विन्द्रस्तवाम सखायः स्तुहीन्द्रं व्यश्वव त्वन्न इन्द्राभर वयमुत्वामपूर्व्य यो न इदमिदं पुराऽऽयाहीम इन्दव इति समाहार्योऽनुरूपोऽभ्रातृव्यो अनात्वं मा ते अमाजुरो यथेति २ अथाछावाकस्येन्द्रं विश्वा अवीवृधन्नुक्थ्यमिन्द्राय शंस्यं श्रुधीहवन्तिरश्च्या आश्रुत्कर्ण श्रुधीहवमसावि सोम इन्द्र त इममिन्द्र सुतं पिब यदिन्द्र चित्रमेहना यस्ते साधिष्ठोऽवसे पुरां भिन्दुर्युवा कविर्वृषा ह्यसि राधसे गायन्ति त्वा गायत्रिण आ त्वा गिरो रथीरिवेति ३ सूक्तानामेकैकं शिष्ट्वाऽऽवपेरन् ४ ८

स्तोमे वर्धमाने १ इमा उ वां भृमयो मन्यमाना इति तिस्र इन्द्रा को वामिति सूक्ते श्रुष्टी वां यज्ञो युवां नरा पुनीषे वामिमानि वां भागधेयानीत्येतस्य यथार्थं मैत्रावरुणः २ यस्तस्तम्भयो अद्रिभिद्यज्ञे दिव इति सूक्ते अस्तेवसुप्रतरमाया-त्विन्द्रः स्वपतिरिमान्धियमिति ब्राह्मणाच्छंसी ३ विष्णोर्नुकमिति सूक्ते परो मात्रयेत्यच्छावाकः ४ ९

पृष्ठ्यस्याभिप्लवेनोक्ते अहनी आद्ये आद्याभ्यां १ तृतीयसवनानि चान्वहं २

उपप्रयन्त इति तु प्रथमेऽहन्याज्यं । ऋग्निं दूतमिति द्वितीये ३ तृतीये युद्दवाहीत्याज्यं ४ वायवायाहि वीतय इत्येका वायो याहि शिवादिव इति द्वे इन्द्रश्च वायवेषां सुतानामिति द्वयोरन्यतरां द्विरामित्रे वरुणे वयमश्विनावेह गच्छतमायाह्यद्रिभिः सुतं सजूर्विश्वेभिर्देवेभिरुत नः प्रियाप्रियास्वित्यौष्णिहं प्रउगं ५ उत्तमेऽन्वृचमभ्यासाश्चतुरद्धराः ६ न वा ७ तृतीयेनाभिप्ल-विकेनोक्तो मध्यन्दिनः । तं तमिद्राधसे महे त्रय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ । वैरूपं चेत् पृष्ठं यद्याव इन्द्र ते शतं यदिन्द्र यावतस्त्वमिति प्रगाथौ स्तोत्रियानुरूपौ ८ १०

चतुर्थेऽहनि यत् प्रातरनुवाकप्रतिपद्यर्धर्चाद्यो न्यूङ्खः १ द्वितीयं स्वरमोकारं त्रिमात्रमुदात्तन्त्रिः २ तस्य तस्य चोपरिष्टादपरिमितान् पञ्च वार्धौ-काराननुदात्तान् ३ उत्तमस्य तु त्रीन् ४ पूर्वमद्धरं निहन्यते न्यूङ्खमाने ५ तदपि निदर्शनायोदाहरिष्यामः ६ ऋापो३ ऒऒऒऒऒऒ ऋो३ ऒऒऒऒऒऒ ऋो३ ऒऒऒ रेवतीः द्मयथा हि वस्वः क्रतुञ्च भद्रं विभृथामृतञ्च । रायो३ ऒऒऒऒऒऒ ऋो३ ऒऒऒऒऒऒ ऋो३ ऒऒऒश्च स्थः स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयोधो३मापो३ ७ ऋाग्निं न स्ववृक्तिभिरित्याज्यं ८ तस्योत्तमावर्जं तृतीयेषु पादेषु न्यूङ्खो निनर्दश्च ६ उक्तो न्यूङ्खः १० स्वरादिरन्त ऋोकारश्चतुर्निनर्दः ११ उदात्तौ प्रथमोत्तमौ । ऋनुदात्तावितरौ । उत्तरोऽनुदात्ततरः १२ प्लुतः प्रथमः । मकारान्त उत्तमः । तदपि निदर्शनायोदाहरिष्यामः १३ ऋाग्निं न स्ववृक्तिभिः । होतारन्त्वा वृणीमहे । यज्ञो३ ऒऒऒऒऒऒ ऋो३ ऒऒऒऒऒऒ ऋो३ ऒऒऒ यस्तीर्णबर्हिषे विवोमदो३ ऋोऋोऋो३म् शीरं पावकशोचिषं विवद्मसो३माग्निं न स्ववृक्तिभिः होतारं त्वा वृणीमहे १४ ऋो३ ऒऒऒऒऒऒ ऋो३ ऒऒऒऒऒऒ ऋो३ ऒऒऒ मदेथ मदैवो३ ऋोऋोऋो३ मोथामो दैवो३मित्यस्य प्रतिगरः १५ ऋपि वोदात्तादनुदात्तं स्वरितमुदात्तमिति चतुर्निनर्दः १६ तदपि निदर्शनायोदा-हरिष्यामः । ऋाग्निं न स्ववृक्तिभिः । होतारं त्वा वृणीमहे । यज्ञो३ ऒऒऒऒऒऒ ऋो३ ऒऒऒऒऒऒ ऋो३ ऒऒऒ यस्तीर्णबर्हिषे विवोमदो३ ऋो३ ऋो३ ऋो३म् शीरं पावकशोचिषं विवद्मसो३माग्निं न स्ववृक्तिभिः । होतारं त्वा वृणीमहे । ऋो३ ऒऒऒऒऒऒ ऋो३ ऒऒऒऒऒऒ ऋो३ ऒऒऒ मदेथमदैवो३ ऋो३ ऋो३

ओ३मोथामो दैवो३मित्यस्य प्रतिगरः १७ प्रथमादर्धौकारादध्वर्युर्न्यूङ्खयेत् १८ प्रथमात् द्वितीयाद्वा १९ व्युपरमं हैके २० यथा वा सम्पादयिष्यन्तो मन्येरन् २१ वायो शुक्रो अयामि ते विहि होत्रा अवीता वायो शतं हरीणामिन्द्रश्च वायवेषां सोमानामाचिकिता न सुक्रतू आ नो विश्वाभिरूतिभिस्त्यमु वो अप्रहणमपत्यं वृजिनं रिपुमम्बितमेनदीतम इत्यानुष्टुभं प्रउगं २२ एकपातिन्यः प्रथमः २३ तं त्वा यज्ञेभिरीमह इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रति-पदनुचरौ २४ श्रुधीहवनिन्द्र मरुत्वाँ इन्द्रेति मरुत्वतीयं २५ अन्त्ये निविदं दध्यादनेकभावे सूक्तानां २६ वराजं चेत् पृष्ठं पिबा सोममिन्द्र मन्दतु त्वेति स्तोत्रियानुरूपौ २७ कुहश्रुत इद्रो युध्यस्य त इति निष्केवल्यं । श्रुधीहवीयस्य तु तृच आद्येऽर्धर्चादिषु न्यूङ्खः २८ एवं कुहश्रुतीयस्य २९ विराजां मध्यमेषु पादेषु ३० नित्य इह प्रतिगरो न्यूङ्खादिः ३१ प्रणवान्तः प्रणवे कुहश्रुतीयानां ३२ अर्धर्चशश्चैनदुत्तमावर्जं ३३ न ते गिरो अपि मृष्ये तुरस्य प्रवोमहे महिवृधे भरध्वमिति चतस्रस्तिस्रश्च विराजः ३४ तासामूर्ध्वमारम्भणीयाभ्य स्तृचाना-वपेरन् ३५ आद्यं मैत्रावरुणस्तस्योत्तमादिशस्तानां तृचं ब्राह्मणाच्छंसी ३६ तस्य चाच्छावाकः ३७ यजामह इन्द्र वज्रदक्षिणमिति द्वितीयानेवमेव ३८ पञ्चमेऽहनि यच्चिद्धि सत्यसोमपा इत्येकैकमेवमेव ३९ षष्ठेऽहनीन्द्राय हि द्यौरसुरो अनम्नतेत्येवमेव ४० ११

स्तोमे वर्धमाने को अघनर्यो वनेन वाय आयाह्यर्वाङित्यष्टर्चान्यावपेरन्नुपरिष्टात् पारुच्छेपीनां १ तैरप्यनतिशस्त ऐन्द्राणि त्रैष्टुभान्यमरुच्छब्दान्यावपेरन् २ न त्वेतान्यनोप्यातिशंसनं ३ एकया द्वाभ्यां वा प्रातःसवने ४ अपरिमि-ताभिरुत्तरयोः सवनयोः ५ पञ्चमस्येममूषुवो अतिथिमुषर्बुधमिति नवाज्य ६ आ नो यज्ञं दिविस्पृशमिति द्वे आ नो वायो महेतन इत्येका रथेन पृथुपाजसा बहवः सूरचक्षस इमा उ वां दिविष्टयः पिबा सुतस्य रसिनो देवं देवं वो वसे देवं देवं बृहदुगायिषेव च इति बार्हतं प्रउगं ७ प्रगाथानेके द्वितीयोत्तमवर्जं ८ यत् पाञ्चजन्यया विशेन्द्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ । अवितासीत्थाहीन्द्र पिब तुभ्यमिति मरुत्वतीयं ९ शाक्वरं चेत् पृष्ठं महानाम्न्यस्तोत्रियः । ता अध्यर्धकारं नव प्रकृत्या तिस्रो भवन्ति १० ताभिः

पुरीषपदान्युपसन्तनुयात् ११ पञ्चाक्षरशः पूर्वाणि पञ्च १२ सर्वाणि वा यथानिशान्तं १३ योनिस्थाने तु यथानिशान्तं सपुरीषपदा उत्तमेन सन्तानः १४ स्वादोरित्था विषूवत उप नो हरिभिः सुतमिन्द्रं विश्वा अवीवृधन्निति त्रयस्तृचा अनुरूपः १५ प्रेदं ब्रह्मेन्द्रो मदाय सत्रा मदास इति निष्केवल्यं १६ पाङ्क्ते पूवा सूक्ते मरुत्वतीये पाङ्क्ते निष्केवल्ये १७ आद्ये तु त्रिष्टुबुत्तमे १८ तयोरवसाने शतक्रतो समप्सुजिदिति मरुत्वतीये १९ शचीपतेऽनेद्येति निष्केवल्ये निष्केवल्ये २० १२

षष्ठस्य प्रातःसवने प्रस्थितयाज्यानां पुरस्तादन्याः कृत्वोभाभ्यामनवानन्तो यजन्ति १ वृषन्निन्द्र वृषपाणास इन्दवः सुषुमायातमद्रिभिर्वनोति हि सुन्वन् क्षयं परीणसो मोषुवो अस्मदभितानि पौंस्योषूणो अग्ने शृणुहि त्वमीडितोऽग्निं होतारं मन्ये दास्वन्तं दध्यङ् ह मे जनुषं पूर्वो अङ्गिरा इति २ एवमेव माध्यन्दिनेऽध्यर्धान्तु तत्रानवानं ३ पिबा सोममिन्द्र सुवानमद्रिभिरिन्द्राय हि द्यौरसुरो अनम्नतेति षट् ४ उपरिष्टात् त्वृच ऋतुयाजानां ५ प्रैषमृते सौयजमृचं चानवानमुक्त्वा ऋगन्तैरसौ यजेति प्रेष्येत् ६ एवमेव यजन्ति ७ तुभ्यं हिन्वानो वसिष्टगा अप इति द्वादश ८ अयं जायत मनुषो धरीमणीत्याज्यं ९ एकेन द्वाभ्याञ्च विग्रहः १० त्रिभिरवसानं चतुर्भिः प्रणवो यत्रार्धर्चशः पारुच्छेप्यः ११ स्तीर्णं बर्हिरिति तृचौ सुषुमायातमद्रिभिर्युवां स्तोमेभिर्देवयन्तो अश्विनावर्मह इन्द्र वृषन्निन्द्रास्तुश्रौषडोषूणो अग्ने शृणुहि त्वमीडितो ये देवासो दिव्येकादश स्थेयमददाद्रभसमृणच्युतमिति प्रउगं । द्वे चैका च पञ्चमे । एकपातिन्य उपोत्तमे । तृच इत्युभयत्र शेषः । उत्तमेऽन्वृचमभ्यासा अष्टाक्षराः १२ न वा १३ स पूर्व्यो महानां त्रय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ । यं त्वं रथमिन्द्र स यो वृषेन्द्र मरुत्व इति तिस्र इति मरुत्वतीयं १४ एकेनाग्रेऽवसाय द्वाभ्यां प्रणुयात् द्वाभ्यामवसाय द्वाभ्यां प्रणुयाद्यत्र पच्छः पारुच्छेप्यः १५ रैवतञ्चेत् पृष्ठं । रेवतीर्नः सधमादे रेवाँ इद्रेवतः स्तोतेति स्तोत्रियानुरूपौ १६ ऐन्द्र याह्युप नः प्रघान्वस्याभूरेक इति निष्केवल्यं १७ अभि त्वं देवं सवितारमोण्योरित्येका तत् सवितुर्वरेण्यमिति द्वे दोषो आगाद्बृहद्गायद्युमद्धेह्याथर्वण । स्तुहि देवं सवितार । तमु ष्टुह्यन्तःसिन्धुं

सूनुं सत्यस्य युवानं । अद्रोघवाचं सुशेवं । सघानो देवः सविता साविषद्वसुपतिः । उभे सुक्षिती सुधातुरिति वैश्वदेवस्य प्रतिपदनुचरौ १८ उद्धृत्य चोत्तमं सूक्तं त्रीणि १९ इदमित्था रौद्रमिति २० प्रागुपोत्तमाया ये यज्ञेनेत्यावपते २१ तस्यार्धर्चशः प्रागुत्तमाया ऊर्ध्वञ्चतुर्थ्याः २२ शिष्टे शस्त्वा स्वस्ति नो मिमीतामश्विना भग इति तृचः २३ इति वैश्वदेवं २४ १

होत्रकाणां द्विपदास्विहोक्थ्येषु स्तुवते १ अत ऊर्ध्वमनुरूपेभ्यो विकृतानि शिल्पानि शंसेयुः २ मैत्रावरुणस्याग्ने त्वं नो अन्तमोऽग्ने भव सुषमिधा समिद्ध इति स्तोत्रियानुरूपौ । अथ वालखिल्या विहरेत् ३ तदुक्तं षोडशिना ४ सूक्तानां प्रथमद्वितीये पच्छः ५ तृतीयचतुर्थे अर्धर्चशः ऋक्शः पञ्चमषष्ठे । व्यतिमर्शं वा विहरेत् ६ पूर्वस्य प्रथमामुत्तरस्य द्वितीयया ७ उत्तरस्य प्रथमां पूर्वस्य द्वितीयया ८ तयोर्नानर्चा ९ प्रथमद्वितीयाभ्यां पादाभ्यामवस्येत् प्रथमद्वितीयाभ्यां प्रणुयात् तृतीयोत्तमाभ्यामवस्येत् तृतीयोत्तमाभ्यां प्रणुयात् १० एवं व्यतिमर्शमर्धर्चशः उत्तरे । एवं व्यतिमर्शमृक्श उत्तरे ११ विपरिहरे-देवोत्तमे सूक्ते गायत्रे सर्वत्र १२ इमानि वां भागधेयानीति प्रागुत्तमाया आहूय दूरोहणं रोहेत् १३ हंसः शुचिषदिति पच्छोऽर्धर्चशस्त्रिपद्या चतुर्थमनवान-मुक्त्वा प्रणुत्यावस्येत् । पुनस्त्रिपद्याऽर्धर्चशः पच्छ एव सप्तमं १४ एतत् दूरोहणं १५ आवां राजानाविति नित्यमैकाहिकं १६ इति नु हौत्रिडनौ १७ अथ महावालभित् १८ एतान्येव षट् सूक्तानि व्यतिमर्शं पच्छो विहरेद्व्यति-मर्शमर्धर्चशो व्यतिमर्शमृक्शः १९ प्रगाथान्तेषु चानुपसन्तानत्रृगावानमे-कपदाः शंसेत् २० इन्द्रो विश्वस्य गोपतिरिन्द्रो विश्वस्य भूपतिरिन्द्रो विश्वस्य चेततीन्द्रो विश्वस्य राजतीति चतस्रः २१ एकां महाव्रतादाहरेत् २२ त्रयो-विंशतिमष्टाक्षरान् पादान् महानाम्नीभ्यः सपुरीषाभ्यः २३ षोडशिनोक्तः प्रतिगरोऽन्यत्रैकपदाभ्यः २४ अवकृष्यैकपदा अविहरंश्चतुर्थं शंसेत् २५ समा-नमन्यत् २६ २

ब्राह्मणाच्छंसिन इमानुकं भुवनासीषधामेति पञ्चायावाजं देवहितं सनेमेति स्तोत्रियानुरूपौ १ अपप्राच इन्द्रेति सुकीर्त्तिः २ तस्यार्धर्चशश्चतुर्थीं ३ अथ

वृषाकपिं शंसेद्यथा होताऽऽज्याद्यां चतुर्थे ४ पङ्क्तिशंसन्त्विह ५ अप्रणवान्तश्च प्रतिगरो द्वितीये पाङ्क्तावसाने ६ तस्मादूर्ध्वं कुन्तापं ७ तस्यादितश्चतुर्दश विग्राहं निनर्द्य शंसेत् ८ तृतीयेषु पादेषूदात्तमनुदात्तपरं यत् प्रथमं तन्निनर्देत् ९ तदपि निदर्शनायोदाहरिष्यामः । इदं जना उपश्रुत । नराशंसस्तविष्यते । षष्टिं सहस्रा नवतिञ्च कौरम अारुशमेषु दद्म हो३म् १० अोथामो दैवोमित्यस्य प्रतिगरः ११ चतुर्दश्यामेकेन द्वाभ्याञ्च विग्रहः १२ शेषोऽर्धर्चशः १३ एता अश्वा अाप्लवन्त इति सप्ततिं पदानि १४ अष्टादश वा १५ नवाद्यानि १६ अलाबुकं निखातकमिति सप्त । यदीं हनत् कथं हनत् पर्याकारं पुनः पुनरिति चैते १७ विततौ किरणौ द्वाविति षडनुष्टुभः १८ दुन्दुभिमाहननाभ्यां जरितरोथामो दैव कोशबिले जरितरोथामो दैव रजनिग्रन्थेर्धानां जरितरोथामो दैवोपानहि पादं जरितरोथामो दैवोत्तरां जनीमाञ्जन्यां जरितरोथामो दैवोत्तरां जनीं वर्त्तन्यां जरितरोथामो दैवेति प्रतिगरा अवसानेषु १९ इहेत्थ प्राग-पागुदगिति चतस्रो द्वेधाकारं प्रणवेनासन्तन्वन् २० अलाबूनि जरितरोथामो दैवो३म् । पृषातकानि जरितरोथामो दैवो३म् । अश्वत्थपलाशं जरितरोथामो दैवो३म् । पिपीलिकावटो जरितरोथामो दैवो३म् । इति प्रतिगराः प्रणवेषु २१ भुगित्यभिगत इति त्रीणि पदानि सर्वाणि यथानिशान्तं २२ श्वा जरितरोथामो दैव पर्णशदो जरितरोथामो दैव गोशफो जरितरोथामो दैवेति प्रतिगराः । वीमे देवा अक्रंसतेत्यनुष्टुप् २३ पत्नी यीयप्स्यते जरितरोथामो दैव । होता विष्टीमेन जरितरोथामो दैवेति प्रतिगरौ २४ अादित्या ह जरि-तरङ्गिरोभ्यो दक्षिणामनयन्निति सप्तदश पदानि । अों ह जरितरोथामो दैव । तथा ह जरितरोथामो दैवेति प्रतिगरौ व्यत्यासं मध्ये २५ प्रणव उत्तमः २६ त्वमिन्द्र शर्मरिणेति भूतेच्छदः २७ तिस्र एता अनुष्टुभः । यदस्या अंहुभेद्याः । इत्याहनस्याः २८ अाज्याद्ययोक्ताश्चतुर्थे २९ कपृन्नरो यद्ध प्राचीरजगन्तेति चैते ३० ईइइइइइईइइइइइईइइइ किमयमिदमाहो३ अो३ अो३ अो३मोथामो दैवो३मित्यासां प्रतिगरः ३१ अधिक्राब्णो अकार्षमित्यनुष्टुप् । सुतासो मधुमत्तमा इति चतस्रः ३२ अवद्रसो अंशुमतीमतिष्ठदिति तिस्रः ३३ अच्छाम इन्द्रमिति नित्यमैकाहिकं ३४ ३

अथाच्छावाकस्य । प्र व इन्द्राय वृत्रहन्तमायेति स्तोत्रियानरूपौ १ अथैव-यामरुदुक्तो वृषाकपिना २ ओ३ उंउंउंउंउंउं ओ३ उंउंउंउंउंउं ओ३ उंउंउं मदे मधोर्मदस्य मदिरस्य मदैवो३ ओ३ओ३ओ३ मोथामो दैवो३मित्यस्य प्रतिगरः । ऋतुर्जनित्रीति नित्यान्यैकाहिकानि ३ एवमुक्थ्यानि यत्र यत्र द्विपदासु स्तुवीरन् ४ नित्यशिल्पं त्विदमहः ५ विश्वजिच्च ६ तौ चेदग्निष्टोमौ यदि वोक्थ्येष्वद्विपदासु स्तुवीरन् माध्यन्दिन एवोर्ध्वमारम्भणीयाभ्यः प्रकृत्या शिल्पानि शंसेयुः ७ बार्हतान्येव सूक्तानि वालखिल्यानां मैत्रावरुणः ८ सुकीर्त्तिं ब्राह्मणाच्छंसी । वृषाकपिञ्च पङ्क्तिशंसं ९ द्यौर्नय इन्द्रेत्यच्छावाकः १० प्रत्येवयामरुदित्येतदाचक्षते ११ होतैवयामरुतमाग्निमारुते पुरस्तान्मा-रुतस्य पच्छः समासमुत्तमे पदे १२ षष्ठे त्वेव पृष्ठ्याहान्यहरहःशस्यैकभूयसीः शस्त्वा मैत्रावरुणो दूरोहणं रोहेत् १३ सम्पातसूक्त एकाहीभवत्सु १४ न ह्येकाहीभवत्स्व हरहःशस्यानि । नारम्भणीया न कद्वन्तः १५ कद्वतां स्थाने नित्यान् प्रगाथाञ्छस्त्वा सम्पातवत्स्व हीनसूक्तानीतरेषु ततोऽन्त्यान्यै-काहिकानि १६ सम्पातवत्सु तु सर्वस्तोमेषु प्राकृते वैकाहेऽहीनसूक्तानि । आदितस्तृतीयानि १७ सामसूक्तानि सप्रगाथानि सर्वपृष्ठेषु पृष्ठानि १८ पृष्ठे संस्थाः १९ अग्निष्टोमः प्रथमं । षोडशी चतुर्थं । उक्थ्या इतरे २० इति पृष्ट्यः २१ प्रत्यक्षपृष्ठः २२ अन्यैः परोक्षपृष्ठः २३ एतैर्वोपसृष्टैः २४ वैरूपा-दीनामभावे पृष्ट्यस्तोमः २५ पवमानभाव आपर्क्यपृष्ठ्यः २६ तनूपृष्ट्यो होतुश्चेच्छ्यैतनौधसे २७ ४

अभिजिद्बृहत्पृष्ठः १ उभयसामा यद्यपि रथन्तरं यज्ञायज्ञीयस्य स्थाने २ पिब-वांस्त्विह सामप्रगाथः ३ पिबा सोमं तमु ष्टुहीति मध्यन्दिनः ४ तयो-रैकाहिके पुरस्तादन्ये वा शंसेयुः ५ एते एवेति गौतमः सप्तदशत्वात् पृष्ट्यस्य ६ यावत्यो यावत्यः कुशानां नवतो दशतो वा निष्केवल्ये तावतिसूक्ता मध्यन्दिनाः स्युरिति महा न्यायः ७ मरुत्वतीयस्योत्तमे विपरीते ८ चातु-र्विंशिकं तृतीयसवनं ९ अभिप्लवत्र्यहः पूर्वः स्वरसामानः १० स्वराणि त्विह पृष्ठानि ११ तेषां स्तोत्रिया यज्ञायथा अपूर्व्यमत्स्यपायि ते मह एनमेनं प्रत्येत नेति १२ आद्यो वा सर्वेषां १३ वयं घत्वा सुतावन्त इति तिस्रो

बृहत्यो यस्ते साधिष्ठोऽवस इति षडनुष्टुभ इत्यनुरूपाः १४ स्तोत्रिये यथा युक्ता बृहती तथाऽनुरूपे १५ स्थायीन्येतानि यथा बृहद्रथन्तरे १६ ५

विषुवान् दिवाकीर्त्यः १ उदिते प्रातरनुवाकः २ ग्रथपाजा ग्रमर्त्य इति षड् धाय्याः सामिधेनीनां ३ सौर्यः सवनीयस्योपालभ्यः ४ सोमापौष्णो वा ५ समुद्रादूर्मिरित्याज्यं । त्यं सुमेषं कयाशुभेति च मरुत्वतीयं ६ महादिवाकीर्त्यं पृष्ठं ७ विभ्राड्बृहत् पिबतु सोम्यं मधु नमो मित्रस्य वरुणस्य चक्षस इति स्तोत्रियानुरूपौ यदि बृहद्रथन्तरे पवमानयोः कुर्युर्योनी एनयोः शंसेत् ८ रथन्तरस्य पूर्वां ९ ग्राद्ये भवतोऽन्याभिरपि सन्निपाते १० उत्तमस्त्विह साम-प्रगाथः ११ नृणामु त्वाऽनृतमङ्गीर्भिरुक्थैरिति तिस्रो यस्तिग्मशृङ्गोऽभि त्यं मेषमिन्द्रस्य नु वीर्याणीति १२ एतस्मिन्नैन्द्रीं निविदं शस्त्वा शंसेदेवोत्तराणि षड्दिवश्चिदस्य सुत इत् त्वमेष प्रपूर्वीर्वृषामदः प्र मंहिष्ठाय त्यमूष्विति १३ इह तार्क्ष्यमन्ततः १४ तस्यैकां शस्त्वाऽऽहूय दूरोहणं रोहेत् १५ इति निष्केवल्यं । विकर्णं चेद् ब्रह्मसामोर्ध्वमनुरूपात् तं वोदस्ममृतीषहमभि प्र वः सुराधसमिति ब्राह्मणाच्छंसी श्यैतनौधसयोर्योनी शंसेत् १६ नौधसस्य पूर्वाम् । श्यैतस्योत्तरां १७ एतद्धोत्रकाणां योनिस्थानं । यच्च प्रगाथ ग्राह्वानमेताभ्यस्तत् पञ्चाहावपरिमितत्वात् १८ उत्तमेनाभिप्लविकेनोक्तं तृतीयसवनं १९ ऐकाहिकौ तु प्रतिपदनुचरौ २० भासञ्च यज्ञायज्ञीयस्य स्थाने २१ पृक्षस्य वृष्णो ग्ररुषस्य नू सह इति स्तोत्रियानुरूपौ २२ मूर्धानं दिवो ग्ररतिं प्रथिव्या मूर्धा दिवो नाभिरग्निः पृथिव्या इति वा २३ ग्रन्यासु चेदेवंलिङ्गास्वतोऽनुरूपः २४ ग्रावृत्ताः स्वरसामानः २५ ६

विश्वजितोऽग्निं नर इत्याज्यं १ चतुर्विंशेन मध्यन्दिनः २ वैराजं तु पृष्ठं सन्यूङ्खं ३ बृहतश्च योनिं प्राग्वैरूपयोन्याः ४ होत्रकाणां पृष्ठानि शाक्वरवैरूपरैवतानि ५ ते योनीः शंसन्ति ६ वामदेव्यस्य मैत्रावरुणः । उक्ते ब्राह्मणाच्छंसिनः ७ काले यस्याच्छावाकः ८ ऐकाहिकौ स्तोत्रियावेतयोर्योनी ९ ता ग्रन्तरेण कद्वतश्चैतेषामेव पृष्ठानां सामप्रगाथान् १० सत्रा मदासो यो जात एवाभूरेक इति सामसूक्तानि पुरस्तात् सूक्तानां । उक्तं तृतीयसवनमुत्तमेन पृष्ठ्याह्ना ।

ऐकाहिकौ तु प्रतिपदनुचरौ । बृहच्चेदग्निष्टोमसाम त्वमग्ने यज्ञानामिति स्तोत्रियानुरुपौ । इति नवरात्रः ११ सर्वेऽग्निष्टोमाः १२ उक्थानेके स्वरसाम्नः १३ द्वितीयमाभिप्लविकं गौः । आयुरुत्तरं १४ त्र्यहक्लृप्ते पूर्वस्मात् त्र्यहात् सवनशो यथान्तरं गौरायुरुत्तरात् १५ षडहक्लृप्ते युग्मेभ्यो गौरयुजेभ्य आयुः १६ दशरात्रे १७ पृष्ट्यः षडहः पूर्वत्र्यहः पुनश्छन्दोमाः १८ न त्वत्र स्थायि वैरूपं तृतीये १९ प्रथमस्य छान्दोमिकस्य द्विषूक्तो मध्यन्दिनः २० वैषुवते निविद्धाने पूर्वे च २१ द्वितीयस्य शंसा महान् महश्चित्त्वमिन्द्र पिबा सोममभितमस्य द्यावापृथिवी महाँ इन्द्रो नृवदिति मरुत्वतीयं २२ अपूर्व्या पुरुत मानितां सुते कीर्त्तिं त्वं महाँ इन्द्र यो ह दिवश्चिदस्य त्वं महाँ इन्द्र तुभ्यमिति निष्केवल्यं । तृतीयस्येन्द्रः स्वाहा गायत् साम तिष्ठा हरी प्रमं दिन इमां उत्वेति मरुत्वतीयं २३ सञ्च त्वे जग्मुरिति सूक्ते आसत्यो यात्वहं भुवं तत्त इन्द्रियमिति निष्केवल्यं । आयाहि वनसे मानुकं बभ्रुरेक इति द्विपदा सूक्तानि पुरस्ताद्वैश्वदेवसूक्तानां २४ इति नु समूल्हः २५ ७

व्यूल्हश्चेत् पृष्ट्यस्योत्तरे त्र्यहे मध्यन्दिनेषु गायत्रांस्तृचानुपसंशस्य तेषु निविदो दध्यात् १ इमं नु मायिनं हुवे त्यमु वः सत्रासाहं मरुत्वाँ इन्द्रमीढ्वस्तमिन्द्रं वाजयामस्ययं ह येन वा इदमुप नो हरिभिः सुतमिति २ त्रैष्टुभान्येषां तृतीयसवनानि ३ चतुर्थेऽहन्या देवो यातु प्र द्यावेति वासिष्ठं प्र ऋभुभ्यः प्रशुक्रैत्विति वैश्वदेवं । वैश्वानरस्य सुमतौ क ईं व्यक्ता अग्निं नर इत्याग्निमारुतं । अष्टादशोत्तमे विराजः ४ द्विपदा एकादश मारुते । एकविंशतिवैश्वदेवसूक्ते ५ पञ्चमस्योदुष्य देवः सविता दमूना इति तिस्रो मही द्यावापृथिवी इह ज्येष्ठे इति चतस्र ऋभुर्विभ्वास्तुषेजनमिति वैश्वदेवं । हविष्यान्तं वपुर्नु तदग्निर्होता गृहपतिः स राजेति तिस्र इत्याग्निमारुतं । उत्तमा वैश्वदेवसूक्ते साध्यासा । उत्तमा जातवेदस्ये ६ सर्वत्राध्यासानुपसमस्य प्रणुयात् ७ षष्ठस्योदुष्य देव इति गार्त्समदं किमु श्रेष्ठ उप नो वाजा इति त्रयोदशार्भवञ्चतस्रश्च वैश्वदेवसूक्ते तृचमन्त्यमुद्धरेदिति वैश्वदेवं ८ अहश्च कृष्णं मध्वोवो नाम सप्रत्नथेत्याग्निमारुतं । इति पृष्ट्यः ९ ८

ग्रथ छन्दोमाः १ समुद्रादूर्मिरित्याज्यं । ग्रा वायो भूष शुचिपा उप नः प्रयाभिर्यासि दाश्वांसमच्छानौ नियुद्भिः शतिनीभिरध्वरं प्रसोतां जीरो ग्रध्वरे-ष्वस्थाद्ये वायव इन्द्रमादनासो या वां शतं नियुतो याः सहस्रमित्येकपातिन्यः प्रयद्वां मित्रावरुणास्यूर्द्धन्ना गोमता नासत्या रथेना नो देव शवसायाहि शुष्मिन् प्रवो यज्ञेषु देवयन्तो ग्रर्चन् प्रज्ञोदसा धायसा सस्र एवेति प्रउगं २ माध्यन्दिने सूक्ते विपरिहृत्येतरयोर्निविदो दध्यात् ३ एवमुत्तरयोश्चतुर्थपञ्चमे ४ ग्रभि त्वा देव सवितः प्रेतां यज्ञस्य शंभुवाऽयं देवाय जन्मन इति तृचा एभिरग्ने दुव इति वैश्वदेवं ५ नित्यानि द्विपदासूक्तानि ६ वैश्वानरो ग्रजीजनदित्येका स विश्वं प्रति चाक्लृपदृतूनुत्सृजते वशी । यज्ञस्य वय उत्तिरन् । वृषापावक दीदिह्यग्ने वैश्वानर द्युमत् । जमदग्निभिराहुतः । प्रयद्वस्त्रिष्टुभं दूतं व इत्याग्निमारुतं ७ ९

द्वितीयस्याग्निं वो देवमित्याज्यं । कुविदंग नमसा ये वृधासः पीवो ग्रन्नाँ रयिवृधः सुमेधा उच्छन्नुषसः सुदिना ग्ररिप्रा इत्येकपातिन्य उशन्ता दूता नदभाय गोपा यावत्तरस्तन्वो यावदोज इत्येका द्वे च प्रति वाँ सूर उदिते सूक्तैर्धेनुः प्रत्नस्य काम्यं दुहाना ब्राह्मण इन्द्रोपयाहि विद्वानूर्ध्वो ग्रग्निः सुमतिं वस्वो ग्रश्रेदु तस्या नः सरस्वती जुषाणेति प्रउगं १ हिरण्यपाणिमूतय इति चतस्रो मही द्यौः पृथिवी च नो युवाना पितरा पुनरिति तृचौ देवानामिदव इति वैश्वदेवं २ ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिं । ग्रजस्रं घर्ममीमहे । दिवि पृष्टो ग्ररोचताग्निर्वैश्वानरो महान् । ज्योतिषा बाधते तमः । ग्रग्निः प्रत्नेषु धामसु कामो भूतस्य भव्यस्य । सम्राडेको विराजति । क्रीडं वः शेर्द्धाग्ने मृडेत्याग्निमारुतं ३ १०

तृतीयस्यागन्म महेत्याज्यं । प्रवीरया शुचयो दद्रिरेते ते सत्येन मनसा दीध्याना दिवि ज्ञयंता रजसः पृथिव्यामाविश्ववाराऽश्विनागतं नोऽयं सोम इन्द्र तुभ्यं सुन्व ग्रातु प्र ब्रह्माणो ग्रङ्गिरसो नज्ञन्त सरस्वतीं देवयन्तो हवन्त ग्रा नो दिवो बृहतः पर्वतादासरस्वत्यभि नो नेषिवस्य इति प्रउगं १ एकपातिन्य उत्तमः २ दोषो ग्रागात् प्रवां महिद्यवी ग्रभीति तृचाविन्द्र इषे ददातु नस्तेनो

रत्नानि धत्तनेत्येका द्वे च ये त्रिंशतीति वैश्वदेवं ३ वैश्वानरो न ऊतय ग्रा प्रयातु परावतः । अग्निर्नः सुष्टुतीरुप । वैश्वानरो न ग्रागमदिमं यज्ञं सजूरुप । अग्निंरुक्थेन वाहसा । वैश्वानरो अङ्गिरोभ्यः स्तोम उक्थञ्च चाकनत् । एषु द्युम्नं स्वर्यमत् । मरुतो यस्य हि प्राग्नये वाचमित्याग्निमारुतं ४ ११

दशमेऽहनि १ अनुष्टुभां स्थाने । अग्निं नरो दीधितिभिररण्योरिति तृचमाग्नेये क्रतौ २ उषा अपस्वसुस्तम इति पच्छो द्विपदां त्रिरुषस्ये ३ आशुभ्रायातमश्विनास्वश्वेति तृचमाश्विने क्रतौ ४ स्तोकसूक्तस्य द्वितीयतृतीययोः स्थानेऽग्ने घृतस्य धीतिभिरुभेसुश्चन्द्रसर्पिष इत्येते ५ इदमापः प्रवहतेत्येतस्याः स्थान आपो अस्मान् मातरः शुन्धयन्त्विवति । अच्छा वो अग्निमवसे प्रत्यस्मा इति तृचयोः स्थानेऽच्छा नः शीरशोचिषं प्रतिश्रुताय वो धृषदिति तृचावच्छावाकः ६ परि त्वाग्ने पुरं वयमित्येतस्याः स्थानेऽग्ने हंसि न्यत्रिणमिति । उत्तिष्ठतावपश्यतेत्येतस्याः स्थान उत्तिष्ठन्नोजसा सहेति । उरु विष्णो विक्रमस्वेति घृतयाज्यास्थाने भवामित्रो न शेव्यो घृतासुतिरिति ७ अहरहश्चाहर्गणेषु यत्रैतदहः स्यात् ८ सिनीवाल्या अभ्यस्येदित्येके ९ नास्मिन्नहनि केनचित् कस्यचिद्विवाच्यमविवाक्यमित्येतदाचक्षते १० संशये बहिर्वेदि स्वाध्यायप्रयोगः ११ अन्तर्वेदीत्येके १२ न व्यञ्जनेनोपहितेन वाऽर्थः १३ प्रत्यसि त्वा प्रायश्चित्तं जुहुयुः १४ अग्ने तमद्याश्वं न स्तोमैरित्याज्यं १५ पञ्चाक्षरेण विग्रहः । दशाक्षरेण वा । आ त्वा रथं यथोतय इत्येतस्याः स्थाने त्रिकद्रुकेषु महिषो यवाशिरमिति १६ सखाय आशिषामहीति तिस्र उष्णिहो मरुत्वाँ इन्द्रेति मरुत्वतीयं १७ कया नश्चित्र आभूवदित्येतासु रथन्तरं पृष्ठं । तस्य योनिं शंसेत् १८ बृहतश्च गाणगारिर्दशरात्रे युग्मान्वयत्वात् १९ तार्क्ष्यैणैकपदा उपसंशस्य ऋगावानमेकपदाः शंसेदिन्द्रो विश्वस्य गोपतिरिति चतस्रः २० उत्तमयोपसन्तानः २१ य इन्द्र सोमपातम इति षडुष्णिहो युध्मस्य त इति निष्केवल्यं २२ तत् सवितुर्वृणीमह इत्येतस्याः स्थानेऽभि त्यं देवं सवितारमोण्योरिति २३ ऋभुक्षण इत्यार्भवं । पश्वानतायुमिति द्वैपदं समिद्धमग्निं समिधा गिरा गृण इति तृचश्च द्विप्रतीकं जातवेदस्यं २४ चतुर्थेन व्यूल्हस्येतराणि सूक्तानि २५ वामदेव्यमग्निष्टोमसामाऽग्निं नरो दीधितिभिर-

रण्योरिति स्तोत्रियानुरूपौ । अग्निष्टोम इदमहः २६ ऊर्ध्वं पत्नीसंयाजेभ्यः २७ १२

गार्हपत्ये जुह्वतीह रमेह रमध्वमिह धृतिरिह स्वधृतिरग्ने वाट् स्वाहा वाडिति १ आग्नीध्रीय उप सृजं धरुणं मातरं धरुणो धयन् । रायस्पोषमिषमूर्जमस्मासु दीधरत् स्वाहेति २ सदः प्रसृप्य मानसेन स्तुवते ३ यर्हि स्तुतं मन्येता-ध्वर्यवित्याह्वयीत ४ हो होतरितीतरः ५ आयङ्गौः पृश्निरक्रमीदित्युपांशु तिस्रः पराचीः शस्त्वा व्याख्यास्वरेण चतुर्होतॄन् व्याचक्षीत ६ देवा वा अध्वर्योः प्रजापतिगृहपतयः सत्रमासत ७ ॐ होतस्तथा होतरित्यध्वर्युः प्रतिगृणात्यवसितेऽवसिते दशसु पदेषु ८ तेषां चित्तिः स्रुगासी३त् । चित्त-माज्यमासी३त् । वाग्वेदिरासी३त् । आधीतं बर्हिरासी३त् । केतो अग्नि-रासी३त् । विज्ञातमग्नीदासी३त् । प्राणो हविरासी३त् । सामाध्वर्युरासी३त् । वाचस्पतिर्होतासी३त् । मन उपवक्तासी३त् ९ ते वा एतं ग्रहमगृह्णत । वाचस्पते विधे नामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम्नाद्यां गच्छ । यां देवाः प्रजापतिगृहपतय ऋद्धिमराध्नुवंस्तामृद्धिं रात्स्याम इति १० अपव्रजत्यध्वर्युः ११ अथ प्रजापतेस्तनूरितर उपांश्वनुद्रवति १२ ब्रह्मोद्यञ्च । ब्रह्मोद्यञ्चोपांश्वेवानुद्रवति । अन्नादा चान्नपत्नी च भद्रा च कल्याणी चानिलया चापभया चानाप्ता चानाप्या चानाधृष्या चाप्रतिधृष्या चापूर्वा चाभ्रातृव्या चेति तन्वः १३ अग्निर्गृहपतिरिति हैक आहुः सोऽस्य लोकस्य गृहपति-र्वायुर्गृहपतिरिति हैक आहुः सोऽन्तरिक्षलोकस्य गृहपतिरसौ वै गृहपतिर्योऽसौ तपत्येष पतिर्ऋतवो गृहाः । येषां वै गृहपतिं देवं विद्वान् गृहपतिर्भवति राध्नोति स गृहपतीराध्नुवन्ति ते यजमानाः । येषां वा अपहतपाप्मानं देवं विद्वान् गृहपतिर्भवत्यप स गृहपतिः पाप्मानं हतेऽप ते यजमानाः पाप्मानं घ्नते १४ अध्वर्यो अरात्स्मेत्युच्चैः १५ एषा याज्या १६ एष वषट्कारः १७ नानुवषट्करोति । उक्तं वषट्कारानुमन्त्रणं १८ अरात्स्म होतरित्यध्वर्युः प्रत्याह १९ मनसाऽध्वर्युर्ग्रहं गृहीत्वा । मनसा भक्षमाहरति २० मानसेषु भक्षेषु मनसोपह्वानं भक्षणे २१ मनसात्मानमाप्याय्यौदुम्बरीं समन्वारभ्य वाचं यच्छन्त्यानक्षत्रदर्शनात् । तत्रानधरान् पाणींश्चिकीर्षेरन् २२ दृश्यमानेष्व-

ध्वर्युमुखाः समन्वारब्धाः सर्पन्त्यातीर्थदेशात् युवन्तमिन्द्रा पर्वता पुरोयुधेति जपन्तः २३ अध्वर्युपथेनेत्येके २४ दक्षिणस्य हविर्धानस्याधोऽक्षेणेत्येके २५ प्राप्य वरान् वृत्वा वाचं विसृजन्ते यदिहोनमकर्म यदत्यरीरिचाम प्रजापतिं तत्पितरमप्येत्विति २६ अथ वाचं निह्नवन्ते वागैतु वागुपैतु वागुप मैतु वागिति २७ उत्करदेशे सुब्रह्मण्यां त्रिराहूय वाचं विसृजन्ते २८ नित्यस्त्विह वाग्विसर्गः २९ एतावत् सात्रं होतृकर्मान्यत्र महाव्रतात् ३० तदेषा-ऽभियज्ञगाथा गीयते । प्रायणीयश्चतुर्विंशं पृष्ठ्योऽभिप्लव एव च । अभि-जित्स्वरसामानो विषुवान् विश्वजित् तथा । छन्दोमा दशमश्चाह उत्तमं तु महाव्रतं । अहीनैकाहः सत्राणां प्रकृतिः समुदाह्रियते । यद्यन्यधीयते पूर्वधोयते तं प्रतिग्रामन्त्यहानि पञ्चविंशतिर्यैर्वै संवत्सरो मितः । एतेषामेव प्रभवस्त्रीणि षष्टिशतानि यदिति ३१ तद्ये केचन छान्दोग्ये वाऽऽध्वर्यवे वा हौत्रामर्शाः समाम्नाता न तान् कुर्यादकृत्स्नत्वाद्धौत्रस्य ३२ छन्दोगप्रत्ययं स्तोम स्तोत्रियः पृष्ठं संस्थेति ३३ अध्वर्युप्रत्ययन्तु व्याख्यानं कामकालदेशदक्षि-णानां दीक्षोपसत्प्रसवसंस्थोत्थानानामेतावत्त्वं हविषामुच्चैरुपांशुतायां हविषा चानुपूर्वं ३४ एतेभ्य एवाहोभ्योऽहीनैकाहान् पश्चात्तरान् व्याख्यास्यामः ३५ १३

एतद्विदं ब्रह्मचारिणमनिराकृतिनं संवत्सरावमञ्चारयित्वा व्रतमनुयुज्या-नुक्रोशिने प्रब्रूयादुत्तरमहः १ महानाम्नीरग्रे २ उदगयने पूर्वपक्षे श्रोष्यन् बहिर्ग्रामात् स्थालीपाकं तिलमिश्रं श्रपयित्वाऽऽचार्याय वेदयीत ३ विदिते व्रतसंशयान् पृष्ट्वा लघुमात्राच्चेदापत्कारिताः स्युरन्वारब्धे जुहुयादग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अविराज एषः । तस्मै जुहोमि हविषा घृतेन मा देवानां मोमुहद्भागधेयं मो अस्माकं मोमुहद्भागधेयं स्वाहा । या तिरश्ची निपद्यतेऽहं विधरणी इति । तां त्वा घृतस्य धारया यजे संराधनीमहं स्वाहा । यस्मै त्वा कामकामाय वयं सम्राडयजामहे । तमस्मभ्यं कामं दत्वाऽथेदं त्वं घृतं पिब स्वाहा । अयन्नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयं शत्रून् जयतु जर्हिषाणोऽयं वाजं जयतु वाजसातौ स्वाहा । असूयन्त्यै चानुमत्यै च स्वाहा । प्रदात्रे स्वाहा । व्याहृतिभिश्च पृथक् ४ हुत्वाऽऽहैतं

स्थालीपाकं सर्वमशानेति ५ भुक्तवन्तमपामञ्जलिपूर्णमादित्यमुपस्थापये त्वं व्रतानां व्रतपतिरसि व्रतञ्चरिष्यामि तछकेयन्तेन शकेयन्तेन राध्यासमिति ६ समाप्य संमील्य वाचं यच्छेत् कालमभिसमीक्षमाणो यदा समयिष्यादाचायण ७ एकरात्रमध्यायोपवादनात् ८ त्रिरात्रं वा नित्याध्यायेन ९ तमेव कालमभिसमीक्षमाण आचार्योऽहतेन वाससा त्रिः प्रदक्षिणं शिरः स मुखं वेष्टयित्वाऽऽहैतं कालमेवंभूतोऽस्वपन् भवेति १० तङ्कालमस्वपन्नासीत ११ अनुवक्ष्यमाणेऽपराजितायां दिश्यग्निं प्रतिष्ठाप्यासिमुदकमण्डलुमश्मानमित्युत्तरतोऽग्नेः कृत्वा वत्सतरीः प्रत्यगुदगसंश्रवणेबद्ध्वा १२ पश्चादग्नेराचार्यस्तृणेषूपविशेदपराजितां दिशमभिसमीक्षमाणः १३ ब्रह्मचारी लेपान् परिमृज्य प्रदक्षिणमग्निमाचार्यञ्च कृत्वोपसंगृह्य पश्चादाचार्यस्योपविशेत् तृणेष्वेव प्रत्यग्दक्षिणामभिसमीक्षमाणः १४ पृष्ठेन पृष्ठं सन्धाय ब्रूयान्मनसा महानाम्नीर्भो अनुब्रूहीति १५ पुनः पृष्ट्वाऽनुक्रोशिने संमील्यैवानुब्रूयात् सपुरीषपदास्त्रिः १६ अनूच्योन्मूच्योष्णीषमादित्यमीक्षयेत् । मित्रस्य त्वा चक्षुषा प्रतीक्षे । मित्रस्य त्वा चक्षषा समोक्षे १७ मित्रस्य वश्चक्षुषानुवीक्ष इति दिशः ससंभाराः । पुनरादित्यं मित्रस्य त्वा चक्षुषा प्रतिपश्यामि योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तं चक्षुषो हेतुर्ऋच्छत्विति । भूमिमुपस्पृशेदग्न इडानम इडा नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो नमो वो अस्तु देवेभ्यः शिवा नः शन्तमा भव सुमृडीका सरस्वति । मा ते व्योम संदृशि । भद्रं कर्णेभिः शृणुयाम देवाः शन्न इन्द्राग्नी भवतामवोभिः स्तुषे जनं सुव्रतं न व्यसीभिः कया नश्चित्र आभुवदिति तिस्रः स्योना पृथिवि भवेति । समाप्य समानं सम्भारवर्जं १८ एष द्वयोः स्वाध्यायधर्मः १९ आचार्यवदेकः २० फाल्गुनाद्याऽऽश्रवणाया अनधीतपूर्वाणामध्यायः २१ तैष्याद्यधीतपूर्वाणामधीतपूर्वाणां २२ १४

उक्तप्रकृतयोऽहीनैकाहाः १ सिद्धैरहोभिरह्नामतिदेशः २ अनतिदेशे त्वेकाहो ज्योतिष्टोमो द्वादशशतदक्षिणस्तेन शस्यमेकाहानां ३ गोआयूषी विपरीते द्व्यहानां ४ त्र्यहाणां पृष्ठ्यत्र्यहः पूर्वः । अभिप्लवत्र्यहो वा ५ एवम्प्रायाश्च दक्षिणा अर्वागतिरात्रेभ्यः ६ साहस्रास्त्वतिरात्राः ७ द्व्यहास्त्र्यहाश्च ८ ये भूयांसस्त्र्यहादहीनाः सहस्रं तेषां त्र्यहे प्रसंख्यायान्वहन्ततः सहस्राणि ९

समावत्त्वेव दक्षिणा नयेयुः १० अतिरिक्तास्तूत्तमेऽधिकाः ११ अतिदिष्टानां स्तोमपृष्ठसंस्थान्यत्वादनन्यभावः १२ नित्या नैमित्तिका विकाराः १३ माध्यन्दिने तु होतुर्निष्केवल्ये स्तोमकारितं शस्यं १४ तत्रोपजनस्तार्क्ष्यवर्जमग्रे सूक्तानां १५ हानौ तत एवोद्धारः १६ येऽर्वाक् त्रिवृतः स्तोमाः स्युस्तृचा एव तत्र सूक्तस्थानेषु १७ यथा नित्या निविदोऽभ्युदियात् १८ १

उक्तानि चातुर्मास्यानि १ सोमान् वक्ष्यामः पर्वणां स्थाने २ अयूपकानेके ३ परिधौ पशुं नियुञ्जन्ति ४वैश्वदेयास्थाने प्रथमं पृष्ट्याहः । जनिष्ठा उग्र उग्रो जज्ञ इति मध्यन्दिनः । ऐकाहिका होत्राः सर्वत्र प्रथमसांपातिके-ष्वहःस्वेकाहीभवत्सु ५ वैश्वानरपार्जन्ये हविषी अग्नीषोमीयस्य पशोः पशु-पुरोडाशेऽन्वायातयेयुः । प्रातःसवनिकेषु पुरोडाशेषु वैश्वदेव्या हवींष्यन्वा-यातयेयुः । वैश्वदेवः पशुः ६ बार्हस्पत्याऽनूबन्ध्या ७ वरुणप्रघासस्थाने द्व्यहः ८ उत्तरस्याह्नः प्रातःसवनिकेषु पुरोडाशेषु वरुणप्रघासहवींष्यन्वा-यातयेयुः ९ मारुतवारुणौ पशू १० मैत्रावरुण्यनूबन्ध्या ११ अग्निष्टोम ऐन्द्राग्नस्थाने १२ साकमेधस्थाने त्र्यहोऽतिरात्रान्तः १३ द्वितीयस्याह्नोऽनुसवनं पुरोडाशेषु पूर्वेद्युर्हवींषि १४ तृतीयेऽहन्युपांश्वन्तर्यामौ हुत्वा पौर्णदर्वं । प्रातःसवनिकेषु क्रैडिनं १५ माध्यन्दिनेषु माहेन्द्राणि १६ अन्तरेण घृतयाज्ये दक्षिणे मार्जालीये पित्र्या १७ तत्रोपस्थानं यथाऽनतिप्रणीतचरतां १८ अनूबन्ध्यायाः पशुपुराडाश आदित्यमन्वायातयेयुः १९ आग्नेय्यैन्द्रा-ग्नैकादशिनाः पशवः २० सौर्याऽनूबन्ध्या २१ अग्निष्टोमः शुनासीरीयायाः स्थाने । प्रातःसवनिकेषु पुरोडाशेषु शुनासीरीयाया हवींष्यन्वायातयेयुः २२ वायव्यः पशुः २३ आश्विन्यनूबन्ध्या २४ अन्वहं पञ्चाशच्छो दक्षिणाः २५ २

अथ राजसूयाः १ पुरस्तात् फाल्गुन्याः पौर्णमास्याः पवित्रेणाग्निष्टोमेनाभ्या-रोहणीयेन यजेत २ पौर्णमास्यां चातुर्मास्यानि प्रयुङ्क्ते ३ नित्यानि पर्वाणि ४ चक्राभ्यां तु पर्वान्तरेषु चरन्ति ५ अहर्विपर्ययं पक्षविपर्ययं वा ६ संवत्सरान्ते समानपक्षेऽभिषेचनीयदशपेयौ ७ उक्थ्यो बृहत्पृष्ठ

उभयसामाभिषेचनीयः ८ संस्थिते मरुत्वतीये दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे शानःशेपमाचक्षीत ९ हिरण्यकशिपावासीन आचष्टे हिरण्यकशिपावासीनः प्रतिगृणाति यशो वै हिरण्यं यशसैवैनं तत् समर्धयति १० ॐमित्यृचः प्रतिगर एवं तथेति गाथायाः ११ ॐमिति वै दैवं तथेति मानुषं दैवेन चैवैनं तन्मानुषेण च पापादेनसः प्रमुञ्चति १२ तस्माद्यो राजा विजिती स्यादप्ययजमान आख्यापयेतैवैतच्छौनःशेपमाख्यानं न हास्मिन्नल्पञ्च नैनः परिशिष्यते १३ सहस्रमाख्यात्रे दद्यात् १४ शतं प्रतिगरित्रे १५ यथास्वमासने १६ संसृपेष्टिभिश्चरित्वा दशपेयेन यजेत १७ तत्र दशदशैकैकं चमसं भक्षयेयुः १८ नित्यान् प्रसंख्यायेताननुप्रसर्पयेयुः १९ ये मातृतः पितृतश्च दशपुरुषं समनुष्ठिता विद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो नाब्राह्मण्यं निनयेयुः २० पितृत इत्येके २१ नवग्वासः सुतसोमास इन्द्रं सखा ह यत्र सखिभिर्नवग्वैरिति निविद्धानयोराद्ये २२ सूक्तमुखीये इत्युक्त एते प्रतीयात् २३ उत्तर आपूर्यमाणपक्षे केशवपनीयो बृहत्पृष्ठोऽतिरात्रः २४ द्वयोर्मासयोर्व्युष्टिद्व्यहः २५ अग्निष्टोमः पूर्वमहः । सर्वस्तोमोऽतिरात्र उत्तरं २६ उत्तर आपूर्यमाणपक्षे क्षत्रस्य धृतिरग्निष्टोमः २७ ३

इति राजसूयाः १ न्यायक्लृप्ताश्च दक्षिणा अन्यत्राभिषेचनीयदशपेयाभ्यां २ अभिषेचनीये तु द्वात्रिंशतं द्वात्रिंशतं सहस्राणि पृथङ्मख्येभ्यः ३ षोडश षोडश द्वितीयिभ्यः ४ अष्टावष्टौ तृतीयिभ्यः । चत्वारि चत्वारि पादिभ्यः ५ संसृपेष्टीनां हिरण्यमाग्नेय्यां वत्सतरी सारस्वत्यामवध्वस्तः सावित्र्यां श्यामः पौष्णां शितिपृष्ठो बार्हस्पत्यायामृषभ ऐन्द्र्यां महानिरष्टो वारुण्यां ६ साहस्रो दशपेयः ७ इमाश्चादिष्टदक्षिणाः ८ सौवर्णी स्रगुद्गातुः ९ अश्वः प्रस्तोतुः । धेनः प्रतिहर्त्तुः १० अजः सुब्रह्मण्यायै ११ हिरण्यप्राकाशावध्वर्योः १२ राजतौ प्रतिप्रस्थातुः १३ द्वादश पष्ठौह्यो गर्भिण्यो ब्रह्मणः १४ वशा मैत्रावरुणस्य १५ रुक्मो होतुः १६ ऋषभो ब्राह्मणाच्छंसिनः । कार्पासं वासः पोतुः । क्षौमी बरासी नेष्टुः १७ एकयुक्तं यवाचितमच्छावाकस्य १८ अनड्वानाग्नीध्रस्य १९ वत्सतर्युन्नेतुः । त्रिवर्षः साण्डो ग्रावस्तुतः २०

४

उशनसस्तोमेन गरगीर्णमिवात्मानं मन्यमानो यजेत १ उशना यत् सहस्यैरयातं त्वमपो यदवेतुर्वशायेति सूक्तमुखीये । गोस्तोमभूमिस्तोमवनस्पतिसवानां न ता अर्वारेणुककाटो अश्नुते न तानशन्ति न दभाति तस्करो बडित्था पर्वतानां दृल्हाचिद्या वनस्पतीन् देवेभ्यो वनस्पते हवींषि वनस्पते रशनया नियूयेति सूक्तमुखीयाः २ आधिपत्यकामो ब्रह्मवर्चसकामो वा बृहस्पतिसवेन यजेत ३ तस्य तृचाः सूक्तस्थानेषु ४ अग्निर्देवेषु राजतीत्याज्यं । यस्तस्तम्भधुनेतय इति सूक्तमुखीये । इन्द्र मरुत्व इह नृणामु त्वेति मध्यन्दिनः । उदुष्य देवः सविता हिरण्यया घृतवती भुवनानामभिश्रियेन्द्र ऋभुभिर्वाजवद्भिः समुक्षितं स्वस्ति नो मिमीतामश्विनाभाग इति वैश्वदेवं । वैश्वानरं मनसाग्निं निचाय्य प्रयन्तु वाजास्तविषीभिरग्नयः समिद्धमग्निं समिधा गिरा गृण इत्याग्निमारुतं । होत्रका ऊर्ध्वं स्तोत्रियानुरूपेभ्यः प्रथमोत्तमान्तृचांच्छंसेयुः ५ प्रगाथेभ्यस्तु माध्यन्दिने ६ अनुसवनमेकादशैकादश दक्षिणाः ७ एकादशैकादश वा सहस्राणि ८ शतानि वा ९ अश्वो माध्यन्दिनेऽधिकः १० भवा भ्रातृव्यवान-धिबुभूषुर्यजेत ११ सद्यस्क्रियाऽनुक्रिया परिक्रिया वा स्वर्गकामः १२ एक-त्रिकेण त्र्येकेण वाऽन्नाद्यकामः १३ गोतमस्तोमेन य इच्छेद्दानकामा मे प्रजा स्यादिति १४ एतेषां सप्तानां शस्यमुक्तं बृहस्पतिसवेन १५ त्वं भुवः प्रतिमानं पृथिव्या भुवस्त्वमिन्द्र ब्रह्मणा महान्त्सद्यो ह जातो वृषभः कनीनस्त्वं सद्यो अपि वो जात इन्द्रानत्वाहिघ्ने अधदेव देवा अनु ते दायि मह इन्द्रियाय कथो नु ते परिचराणि विद्वानिति द्वे एकस्य चिन्मे विभ्व१स्त्वोज एकन्नु त्वा सत्पतिं पाञ्चजन्यं त्र्यर्यमा मनुषो देवताता प्रघान्वस्य महतो महानीत्था हि सोम इन्मद इन्द्रो मदाय वावृध इति सूक्तमुखीयाः १६ ५

गोतमस्तोममन्तरुक्थ्यं कुर्वन्ति १ ग्रहान्तरुक्थ्यश्चेदग्ने मरुद्भिर्ऋक्वभिः पा इन्द्रावरुणाभ्यां मत्स्वेन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यां सजूरित्याग्निमारुते पुरस्तात् परिधानीयाया आवपेत २ उभयोराह्वानं ३ अन्यतरस्यामेके । उक्थ्यस्तोत्रियेषु चेद्यज्ञायज्ञीयेन ४ स्वैर्वा ५ सकृदाहूय स्तोत्रियान् ।

तथानुरूपान् ६ अन्यत्राप्येवं स्तोत्रियानुरूपसन्निपाते ७ यद्यु वै यज्ञा-यज्ञीययोनौ सर्वैरेवोक्थ्यसामभिः प्रकृत्या स्यात् तथा सति ८ ६

श्येनाजिराभ्यामभिचरन् यजेत १ अहं मनुर्गर्भेनुसंस्त्वया मन्यो यस्ते मन्य-विति मध्यन्दिनौ २ शेषो बृहस्पतिसवेन ३ सन्नद्धा लोहितोष्णीषा निस्त्रिंशिनो याजयेयुः ४ शरमयं बर्हिः ५ मौसलाः परिधयः ६ वैभीतक इध्मः ७ वाघातको वा ८ अपगूर्याश्रावयेत् ९ प्रत्याश्रावयेच्च १० छिन्दन्निव वषट्कुर्यात् ११ दृषन्निव जुहुयात् १२ साद्यस्केषूर्वरा वेदिः १३ खल उत्तरवेदिः १४ खलेवाली यूपः १५ स्फ्यग्रो यूपः १६ अचषालः १७ कलापी चषालः १८ इत्यागन्तुका विकाराः १९ अन्यांश्चाध्वर्यवो विदुः २० सिद्धे तु शस्ये होता संप्रैषान्वयः स्यात् २१ पाप्या कीर्त्या पिहितो महारोगेण वा यो वाऽलंप्रजननः प्रजां न विन्देत सोऽग्निष्टुता यजेत २२ तिष्ठाहरी यो जात एवेति मध्यन्दिनः । सर्वाग्नेयश्चेत् स्तोत्रियानुरूपा आग्नेयाः स्युः २३ विचारि वा २४ अपिवा सर्वेषु देवताशब्देष्वग्निमेवाभिसंनमेत् २५ तथा सत्यन्वक्षमिन्द्रस्तुता यजेत २६ इन्द्र सोममिन्द्रं स्तवेति मध्यन्दिनः २७ भूतिकामो वा ग्रामकामो वा प्रजाकामो वा २८ इमा उ त्वा य एक इदिति मध्यन्दिनः । इन्द्राग्न्योः कुलायेन प्रजातिकामः २९ तिष्ठाहरी तमु ष्टुहीति मध्यन्दिनः । ऋषभेण विजिगीषमाणः ३० मरुत्वाँ इन्द्र युध्मस्यत इति मध्यन्दिनः । तीव्रसोमेनान्नाद्यकामः ३१ क्वस्य वीरस्तीव्रस्याभिवयस इति मध्यन्दिनः । विघनेनाभिचरन् ३२ तस्य शस्यमजिरेण ३३ इन्द्राविष्णोरु-त्क्रान्तिना स्वर्गकामः ३४ इमा उ त्वा द्यौर्नय इन्द्रति मध्यन्दिनः । यः कामयेत नैष्णिह्यं पाप्मन इयामिति स ऋतपेयेन यजेत ३५ ऋतस्य हि शुरुधः सन्ति पूर्वीरिति सूक्तमुखीये । सत्येन चमसान् भक्षयन्ति ३६ सत्यमियं पृथिवी सत्यमयमग्निः सत्यमयं वायुः सत्यमसावादित्य इति ३७ सोम-चमसो दक्षिणा ३८ ७

अतिमूर्त्तिना यक्ष्यमाणो मासं सौर्याचान्द्रमसीभ्यामिष्टीभ्यां यजेत १ शुक्लं चान्द्रमस्या । सौर्ययेतरं २ अत्राह गोरमन्वत नवो नवो भवति

जायमानस्तरणिर्विश्वदर्शतश्चित्रं देवानामुदगादनीकमिति याज्यानुवाक्याः ३ स ईं महीन्धुनिमेतोररम्णात् स्वप्नेनाभ्युप्याचुमुरिन्धुनिञ्चेति सूक्तमुखीये ४ सूर्यस्तुता यशस्कामः ५ पिबा सोममभीन्द्रं स्तवेति मध्यन्दिनः । व्योम्ना-ऽन्नाद्यकामः ६ विश्वदेवस्तुता यशस्कामः ७ पञ्चशारदीयेन पशुकामः ८ एतेषां त्रयाणां कयाशुभातदिदासेति मध्यन्दिनः । उभयसामानौ पूर्वौ ९ उक्थ्यः पञ्चशारदीयः । विशो विशो वो अतिथिमित्याज्यं १० कणवरथन्तरं पृष्ठं ११ गोसववविवधौ पशुकामः १२ इन्द्र सोममेतायामेति मध्यन्दिनः १३ दश सहस्राणि दक्षिणाः १४ षोडशैकाहाः १५ आयुर्गौरिति व्यत्यासं १६ उद्भिद्वलभिदौ स्वर्गकामः १७ इन्द्र सोममिन्द्रः पूर्भिदिति मध्यन्दिनः १८ विनुत्यभिभूत्योरिषुवज्रयोश्च मन्युसूक्ते १९ अभिचरन् यजत २० त्विष्य-पचित्योः सम्राट्स्वराजो राड्विराजोः शदस्य चैकाहिके २१ उपशदस्य राशिमराययोश्च कयाशुभीयतदिदासीये २२ भूतिकामराज्यकामान्नाद्यका-मेन्द्रियकामतेजस्कामानां २३ एते कामा द्वयोर्द्वयोः २४ ऋषिस्तोमा व्रा-त्यस्तोमाश्च पृष्ठ्याहानि २५ नाकसद् ऋतुस्तोमा दिक्स्तोमाश्चाभिप्लवाहानि २६ ८

वाजपेयेनाधिपत्यकामः १ सप्तदश दीक्षाः २ सप्तदशापवर्गो वा ३ हिरण्यस्रज ऋत्विजो याजयेयुः ४ वज्रकिञ्जल्का शतपुष्करा होतुः ५ विश्वजिदाज्यं कयाशुभातदिदासेति मध्यन्दिनः । संस्थिते मरुत्वतीये बार्हस्पत्येष्टिः ६ आज्यभागप्रभृतीडान्ता । बृहस्पतिः प्रथमं जायमानो बृह-स्पतिः समजयद्वसूनि । त्वामीडते अजिरं दूत्यायाग्निं सुदीतिं सुदृशं गृणन्त इति संयाज्ये ७ यदि त्वध्वर्यव आजिञ्जापयेयुरथ ब्रह्मा तीर्थदेशे मयूखे चक्रं प्रतिमुक्तं तदारुह्य प्रदक्षिणमावर्त्त्यमाने वाजिनां साम गायादाविर्मर्या आवाजं वाजिनो अग्मन् । देवस्य सवितुः सवे स्वर्गाँ अर्वन्तो जयतः स्वर्गाँ अर्वतो जयतीति वा ८ यदि साम नाधीयात्त्रिरेतामृचं जपेत् । तृतीयेनाभिप्ल-विकेनोक्तं तृतीयसवनं । चित्रवतीषु चेत् स्तुवीरंस्त्वं नश्चित्र ऊत्याग्ने विव-स्वदुषस इत्यग्निष्टोमसाम्नः स्तोत्रियानुरूपौ । षोडशी त्विह ९ तस्मादूर्ध्व-मतिरिक्तोक्थं १० प्र तत्ते अद्य शिपिविष्टनाम प्र तद्विष्णुस्तवते वीर्येणेति

स्तोत्रियानुरूपौ ११ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्यत्ते दित्सु प्रराध्यं त्वामिच्छवसस्पते १२ तं प्रत्नथेति त्रयोदशानामेकां शिष्ट्वाऽऽहूय दूराहणं रोहेत् १३ बृहस्पते युवमिन्द्रश्च स्व इति परिधानीया । विभ्राट् बृहत् पिबतु सोम्यं मध्विति याज्या । तस्य गवां शतानामश्वरथानामश्वानां साद्यानां वह्यानां महानसानां दासीनां निष्ककण्ठीनां हस्तिनां हिरण्यकक्ष्याणां सप्तदश सप्तदशानि दक्षिणाः १४ दशान्ये दक्षिणागणा धनानां शतावमापराध्यानां १५ पूर्वान् वा गणशोऽभ्यस्येत् १६ सप्तदश सप्तदशानि सम्पादयेत् १७ इति वाजपेयः १८ तेनेष्ट्वा राजा राजसूयेन यजेत । ब्राह्मणो बृहस्पतिसवेन १९ ९

अनिरुक्तस्य चतुर्विंशेन प्रातःसवनं तृतीयसवनञ्च १ तं प्रत्नथेति तु त्रयोदशवैश्वदेवं २ कयाशुभातदिदासेति मध्यन्दिनः ३ होत्रका ऊर्ध्वं प्रगाथेभ्यः प्रथमान् सम्पाताञ्छंसेयुः ४ अहीनसूक्तानि वा ५ एवं पूर्वे सवने बृहत्पृष्ठेष्वसमाम्नातेषु ६ प्रतिकामं विश्वजिच्छिल्पः ७ तस्य समानं विश्वजिता प्रगाथेभ्यः ८ बृहस्पतिसवेनाज्यं । निष्केवल्यमरुत्वतीयौ च तृचौ ९ ताभ्यां तु पूर्वे ऐकाहिके १० होत्रका ऊर्ध्वं प्रगाथेभ्यः शिल्पान्यविकृतानि शंसेयुः ११ सामसूक्तानि च १२ आद्यांस्तृचानहीनसूक्तानां १३ अन्त्यानामैकाहिकानामुत्तमान् १४ समानं तृतीयसवनं बृहस्पतिसवेन । नाभानेदिष्ठस्त्विह पूर्वो वैश्वदेवात् तृचात् १५ एवयामरुत्त्वाग्निमारुते मारुतात् १६ तयोरुक्तः शस्योपायः १७ १०

यस्य पशवो नोपधरेरन्नन्यान्वाभिजनान्निनीत्सेत सोऽप्तोर्यामेण यजेत १ माध्यन्दिने शिल्पयोनिवर्जमुक्तो विश्वजिता २ एकाहेन ३ गर्भकारञ्चेत् स्तुवीरंस्तथैव स्तोत्रियानुरूपान् ४ रथन्तरेणाग्रे ततो वैराजेन ततो रथन्तरेण ५ बृहद्वैराजाभ्यां वैवमेव ६ वामदेव्यशाक्वरे मैत्रावरुणस्य । नौधसवैरूपे ब्राह्मणाछंसिनः ७ श्यैतवैरूपे वा ८ कालेयरैवते अच्छावाकस्य ९ सामानन्तर्येण द्वौ द्वौ प्रगाथावगर्भकारं १० अतिरात्रस्त्विह ११ अद्वैपदोक्थ्यश्चेद्वैषुवतं तृतीयसवनं १२ ऊर्ध्वमाश्विनादतिरिक्तोक्थ्यानि १३ जराबोधत द्विविड्ढि

जरमाणः समिध्यसेऽग्निनेन्द्रेणाभात्यग्निः क्षेत्रस्य पतिना वयमिति परिधानीया युवं देवा क्रतुना पूर्व्येणेति याज्या १४ यदद्यकच्च वृत्रहन्नुद्धेदभिश्रता मघमानो विश्वाभिः प्रातर्यावाणा क्षेत्रस्य पते मधुमन्तमूर्मिमिति परिधानीया युवां देवास्त्रय एकादशास इति याज्या १५ तमिन्द्रं वाजयामसि महाँ इन्द्रो य ओजसा नूनमश्विना त वां रथं मधुमतीरोषधीर्द्याव आप इति परिधानीयाऽपनाय्यं तदश्विना कृतं वामिति याज्या १६ अतो देवा अवन्तु न इति स्तोत्रियानुरूपौ १७ उत नोऽधियोगो अग्रा इति वानुरूपस्योत्तमा १८ ईडे द्यावापृथिवी उभा उ नूनं दैव्या होतारा प्रथमा पुरोहितेति परिधानीयाऽयं वां भागो निहितो यजत्रेति याज्या १९ यदि नाधीयात्पुराणमोकः सख्यं शिवं वामिति चतस्रो याज्याः २० तद्वो गाय सुते सचा स्तोत्रमिन्द्राय गायत त्यमु वः सत्रासाहं सत्रा ते अनुकृष्टय इति वा स्तोत्रियानुरूपाः २१ अपरिमिताः परःसहस्रा दक्षिणाः २२ श्वेतश्चाश्वतरीरथो होतुर्हेतुः २३ ११

ज्योतिर्र्ऋद्धिकामस्य १ नवसप्तदशः प्रजातिकामस्य २ विषुवत्स्तोमो भ्रातृव्यवतः ३ गौरभिजिच्च ४ गौरुभयसामा सर्वस्तोमो बुभूषतः ५ आयुर्दीर्घव्याधेः ६ पशुकामस्य विश्वजित् । ब्रह्मवर्चसकामवीर्यकामप्रजा-कामप्रतिष्ठाकामानां पृष्ठ्याहान्यादितः पृथक्कामैः ७ इत्यतिरात्राः ८ तेषा-माद्यास्त्रय ऐकाहिकशस्याः ९ इत्येकाहाः १० अथाहीनाः ११ द्व्यहप्रभृतयो द्वादशरात्रपराध्यीः अग्निष्टोमादयः अतिरात्रान्ताः मासापवर्गाः अपरिमा-णदीक्षाः १२ एकाहांश्चैतरेयिणः १३ साहस्रशश्च दक्षिणाः १४ अतिरात्रांश्च सर्वशः १५ तत्राह्नां संख्याः संख्याताः षडहान्ता अभिप्लवात् १६ अतिरात्रस्त्वन्त्यः संख्यापूरणे गृहीतानां १७ हानौ वैश्वानरोऽधिकः १८ १

आङ्गिरसं स्वर्गकामः १ यो वा पणयो हीनोऽनप्रेप्सुः स्यात् २ चैत्ररथम-न्नाद्यकामः । कापिवनं स्वर्गकाम इति द्व्यहाः ३ प्रथमस्य तूत्तरस्याह्नस्तार्त्तीयं तृतीयसवनं ४ त्वं हि क्षैतवदिति चाज्यं ५ गर्गत्रिरात्रं स्वर्गकामः ६ तस्य मध्यमस्याह्नो वामदेव्यं पृष्ठं । विशोविशीयमग्निष्टोमसाम ७ वारवन्तीय-मुत्तमे ८ त्वमग्ने वसूंरिति चाज्यं ९ बैदत्रिरात्रं राज्यकामः १० सर्वे

त्रिवृतोऽतिरात्राः ११ छन्दोमपवमानान्तर्वसू पशुकामः १२ पराकच्छन्दो-मपराकौ स्वर्गकामः १३ इति त्र्यहाः १४ गर्गत्रिरात्रशस्याः १५ अत्रेश्चतुर्वीरं वीरकामः १६ तस्य वीरवन्त्याज्यानि १७ यमग्ने वाजसातमेति द्वितीये-ऽहन्याज्यं । अग्नायो मर्त्य इति तृतीये । अग्निं नर इति चतुर्थे १८ षोडशिमञ्चतुर्थं १९ तस्याभि त्वा वृषभासुत इति गायत्रीषु रथन्तरं पृष्ठं २० अनुष्टुब्बृहतीषु बृहत् २१ चतुर्थे त्वं बलस्य गोमतो यज्ञायथा अपूर्व्येति वा २२ जामदग्नं पुष्टिकामः २३ तस्य पुरोडाशिन्य उपसदः २४ वैश्वामित्रं भ्रातृव्यवान् प्रजाकामो वसिष्ठसंसर्पं २५ इति चतुरहाः २६ सार्वसेनं पशुकामः । दैवं भ्रातृव्यवान् । पञ्चशारदीयं पशुकामः । व्रतवन्तमा-युष्कामः । वावरं वाक्प्रवदिषुः २७ इति पञ्च पञ्चरात्राः २८ पञ्चशारदीयस्य तु सप्तदशोक्षाण ऐन्द्रामारुता मारुतीभिः सह वत्सतरीभिः सप्तदशभिः सप्तदशभिः पञ्चवर्षपर्यग्निकृताः सवनीयाः २९ तेषां त्रींस्त्रींश्चतुर्ष्वहःस्वालभेरन् । परिशिष्टान् पञ्च पञ्चमे ३० व्रतवतस्तु तृतीयस्याह्नः स्थाने महाव्रतं ३१ पृष्ठ्यपञ्चाह उत्तमः ३२ २

ऋतूनां षडहं प्रतिष्ठाकामः १ पृष्ठ्यः समूल्हो व्यूल्हो वा २ पृष्ठ्यावलम्बं पशुकामः ३ पृष्ठ्यपञ्चाहोऽभ्यासक्तो विश्वजिच्च ४ सम्भार्यमायुष्कामः । पृष्ठ्यत्र्यहः पूर्वोऽभिप्लवत्र्यहश्च ५ ऋषिसप्तरात्रमृद्धिकामः । प्राजापत्यं प्रजाकामः । छन्दोमपवमानव्रतं पशुकामः । जामदग्नमन्नाद्यकामः । एते चत्वारः पृष्ठ्यो महाव्रतञ्च ६ पृष्ठ्यो महाव्रतञ्च ७ व्रतं तु स्वस्तोमं प्रथमे ८ सप्तदशं द्वितीये ९ छन्दोमपवमानं तृतीये १० चतुर्विंशो बहिष्पवमानः सप्तदशः शेषश्चतुर्थः ११ ऐन्द्रमत्यन्याः प्रजा बुभूषन् १२ त्रिकद्रुका अभिजिद्विश्वजिन्महाव्रतं सर्वस्तोमः १३ जनकसप्तरात्रमृद्धिकामः अभिप्लव-चतुरहोविश्वजिन्महाव्रतं ज्योतिष्टोमः १४ पृष्ठ्यस्तोमो विश्वजिच्च पशुकामस्य सप्तमः १५ देवत्वमीप्सतोऽष्टरात्रः १६ पृष्ठ्यो महाव्रतं ज्योतिष्टोमः १७ नवरात्रमायुष्कामः । पृष्ठ्यस्त्रिकद्रुकाश्च १८ त्रिकद्रुकाः पृष्ठ्यावलम्ब इति पशुकामस्य १९ इति नवरात्रौ २० त्रिककुबध्यर्द्धः पृष्ठ्यः । महा-त्रिककुप्व्यूल्हो नवरात्रः । समूल्हत्रिककुप्समूल्हः २१ चतुष्टोमत्रिककुबध्य-

र्द्धोऽभिप्लवः । एतैश्चतुर्भिः स्वानां श्रैष्ठ्यकामो यजेत २२ कुसुरुबिन्दु-मृद्धिकामः । त्रयाणां पृष्ठ्याह्नामेकैकं त्रिः २३ छन्दोमवन्तं पशुकामः । पृष्ठ्यावलम्बस्य प्राग्विश्वजितश्छन्दोमा दशमश्चाहः २४ पुराऽभिचरन् २५ ज्योतिर्गामभितो गौरभिजितं विश्वजिदायुषं २६ शललीपिशङ्गं श्रीकामः २७ अभिप्लवत्र्यहः पूर्वस्त्रिः २८ इति दशरात्राः २९ ३

पौण्डरीकमृद्धिकामः । पृष्ठ्यस्तोमश्छन्दोमा गोतमस्तोमो विश्वजित् । व्यूल्हो नवरात्रो महाव्रतं वैश्वानर इति वा १ अथ सम्भार्यौ २ अतिरात्रश्चतु-र्विंशमध्यर्द्धोऽभिप्लवः पृष्ठ्यो वा ३ इन्द्रवज्रं भ्रातृव्यवान् ४ पृष्ठ्यस्याद्ये अहनी व्यत्यासमानवरात्रात् ५ ततो महाव्रतं ६ ४

अथ द्वादशाहा भवेयुः १ सत्राणि भवेयुः । अहीना वा २ उक्तो दशरात्रः ३ समूल्हो व्यूल्हो वा ४ तमभितोऽतिरात्रौ ५ सम्भार्ययोर्वा वैश्वानर-मुपदध्यात् ६ संवत्सरप्रवल्हं श्रीकामः । अतिरात्रश्चतुर्विंशं विषुवद्व्रजा नवरात्रो महाव्रतं ७ अथ भरतद्वादशाहः ८ इममेवैकाहं पृथक्संस्थाभिरुपेयुः ९ अतिरात्रमग्रेऽथाग्निष्टोममथाष्टा उक्थ्यानथाग्निष्टोममथातिरात्रं १० इति द्वादशाहः ११ तैरात्मना बुभूषन्तः प्रजया पशुभिः प्रजनयिष्यमाणाः स्वर्गं लोकमेष्यन्तः स्वानां श्रैष्ठ्यमैच्छन्त उपेयुर्वा यजेत वा १२ इति पृथक्त्वं १३ अथ सामान्यं १४ अपरिमितत्वाद्धर्मस्य प्रदेशान् वक्ष्यामः १५ यथा हि परिमिता वर्णा अपरिमितां वाचो गतिमाप्नुवन्त्येवमेव परिमितानामह्नाम-परिमिताः संघाताः १६ सिद्धानि त्वहानि तेषां यः कश्च समाहारः सिद्धमेव शस्यं १७ अह्नां तु संशये स्तोमपृष्ठसंस्थाभिरेके व्यवस्थां १८ तदकृत्स्नं दृष्टत्वाद्व्यतिक्रमस्य १९ छन्दोगैरेव कृत्वा समयमह्नोबार्हतराथन्तरता-यामेकाहेन शस्यं राथन्तराणां २० द्वितीयेनाभिप्लविकेन बार्हतानां २१ अपि वा कयाशुभीयतदिदासीये एव निविद्धाने स्यातामैकाहिकमितरत् २२ ५

सर्वान् कामानाप्स्यन्त्सर्वा विजितीर्विजिगीषमाणः सर्वा व्युष्टीर्व्यशिष्य-न्नश्वमेधेन यजेत १ अश्वमुत्स्रक्ष्यन्निष्टिभ्यां यजेत २ अग्निर्मूर्धन्वान् ३ विराजौ

संयाज्ये ४ पौष्णी द्वितीया ५ त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इति सद्वन्तौ ६ त्वां चित्रश्रवस्तम यद्वाहिष्ठं तदग्नय इति संयाज्ये । अश्वमुत्सृज्य रक्षिणो विधाय सावित्र्यस्तिस्र इष्टयोऽहरहर्वैराजतन्त्राः ७ सविता सत्यप्रसवः प्रसविताऽऽसविता ८ य इमा विश्वा जातान्या देवो यातु सविता सुरत्नः सद्यानो देवः सविता सहावेति द्वे ९ समाप्तासु समाप्तासु दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे पारिप्लव माचक्षीत १० हिरण्मये कूर्चेऽध्वयुरासीनः प्रतिगृणाति ११ आख्यास्यन्नध्वर्यवित्याह्वयीत १२ हो होतरितीतरः १३ ६

प्रथमेऽहनि मनुर्वैवस्वतस्तस्य मनुष्या विशस्त इम आसत इति गृहमेधिन उपसमानीताः स्युस्तानुपदिशत्यृचो वेदः सोऽयमिति सूक्तं निगदेत् १ द्वितीयेऽहनि यमो वैवस्वतस्तस्य पितरो विशस्त इम आसत इति स्थविरा उपसमानीताः स्युस्तानुपदिशति यजुर्वेदो वेदः सोऽयमित्यनुवाकं निगदेत् २ तृतीयेऽहनि वरुण आदित्यस्तस्य गन्धर्वा विशस्त इम आसत इति युवानः शोभना उपसमानीताः स्युस्तानुपदिशत्यथर्वाणो वेदः सोऽयमिति यद्भेषजं निशान्तं स्यात् तन्निगदेत् ३ चतुर्थेऽहनि सोमो वैष्णवस्तस्याप्सरसो विशस्ता इमा आसत इति युवतयः शोभना उपसमानीताः स्युस्ता उपदिशत्याङ्गिरसो वेदः सोऽयमिति यद्घोरं निशान्तं स्यात् तन्निगदेत् ४ पञ्चमेऽहन्यर्बुदः काद्रवेयस्तस्य सर्पा विशस्त इम आसत इति सर्पाः सर्पविद इत्युपसमानीताः स्युस्तानपदिशति विषविद्यावेदः सोऽयमिति विषविद्यां निगदेत् ५ षष्ठेऽहनि कुबेरो वैश्रवणस्तस्य रक्षांसि विशस्तानीमान्यासत इति सेलगाः पापकृत इत्युपसमानीताः स्यस्तानुपदिशति पिशाचविद्यावेदः सोऽयमिति यत् किंचित् पिशाचसंयुक्तं निशान्तं स्यात् तन्निगदेत् ६ सप्तमेऽहन्यसितो धान्वस्तस्यासुरा विशस्त इम आसत इति कुसीदिन उपसमानीताः स्युस्तानुपदिशत्यसुरविद्यावेदः सोऽयमिति मायां काञ्चित् कुर्यात् ७ अष्टमेऽहनि मत्स्यः सामदस्तस्योदकेचरा विशस्त इम आसत इति मत्स्याः पुञ्जिष्ठा इत्युपसमानीताः स्युस्तानुपदिशति पुराणविद्यावेदः सोऽयमिति पुराणमाचक्षीत ८ नवमेऽहनि तार्क्ष्यो वैपश्चितस्तस्य वयांसि विशस्तानीमान्यासत इति वयांसि

ब्रह्मचारिण इत्युपसमानीताः स्युस्तानुपदिशतीतिहासो वेदः सोऽयमिती-तिहासमाचक्षीत । दशमेऽहनि धर्म इन्द्रस्तस्य देवा विशस्त इम आसत इति युवानः श्रोत्रिया अप्रतिग्राहका इत्युपसमानीताः स्युस्तानुपदिशति सामवेदो वेदः सोऽयमिति साम गायात् । एवमेवैतत् पर्यायशः संवत्सरमाचक्षीत ९ दशमीं दशमीं समापयन् १० संवत्सरान्ते दीक्षेत ११ ७

त्रीणि सुत्यानि भवन्ति १ गोतमस्तोमः प्रथमं । द्वितीयस्याह्नः पशोरु-पाकरणकालेऽश्वमानीय बहिर्वेद्यास्तावेवास्थापयेयुः २ स चेदवघ्रायादु-पवर्त्तेत वा यज्ञसमृद्धिं विद्यात् ३ न चेत् सुगव्यं नो वाजी स्वश्व्यमिति यजमानं वाचयेत् ४ तमवस्थितमुपाकरणाय यदक्रन्द इत्येकादशभिः स्तौत्यप्रणुवन् ५ अनुस्वाध्यायमित्येके ६ अध्रिगो शमीध्वमिति शिष्ट्वा षड्विंशतिरस्य वङ्क्रय इति वा मा नो मित्र इत्यावपेत । उपप्रागाच्छसनं वाज्यर्वेति च द्वे ७ संज्ञप्तमश्वं पत्न्यो धून्वन्ति दक्षिणान् कशपक्षानुद्ग्रथ्येतरान् प्रवृत्य सव्यानूरूनाघ्नानाः ८ अथास्मै महिषीमुपनिपातयन्ति ९ तां होता-ऽभिमेथति माता च ते पिता च तेऽग्रे वृक्षस्य क्रीडतः प्रतिलानीति ते पिता गभेमुष्टिमतंसयदिति १० सा होतारं प्रत्यभिमेथत्यनुचर्य्यश्च शतं राजपुत्र्यो माता च ते पिता च तेऽग्रे वृक्षस्य क्रीडतः । यीयप्स्यत इव ते मुखं होतर्मा त्वं वदो बह्विति ११ वावातां ब्रह्मोर्ध्वामेनामुच्छ्रयताद्गिरौ भारं हरन्निव । अथास्यै मध्यमेजतु शीते वाते पुनर्निवेति १२ सा ब्रह्माणं प्रत्यभिमेथत्य-नुचर्य्यश्च शतं राजपुत्र्य ऊर्ध्वमेनमुच्छ्रयत गिरौ भारं हरन्निव । अथास्य मध्यमेजतु शीते वाते पुनर्निवेति १३ सदः प्रसृप्य स्वाहाकृतिभिश्चरित्वा १४ ८

ब्रह्मोद्यं वदन्ति १ कःस्विदेकाकी चरति क उस्विज्ञायते पुनः । किंस्विद्धि-मस्य भेषजं किंस्विदावपनम्महदिति होताऽध्वर्युं पृच्छति । सूर्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महदिति प्रत्याह । किंस्वित् सूर्यसमं ज्योतिः किं समुद्रसमं सरः । कःस्वित् पृथिव्यै वर्षीयान् कस्य मात्रा न विद्यत इत्यध्वर्युर्होतारं पृच्छति । सत्यं सूर्यसमं ज्योतिर्द्यौः

समुद्रसमं सरः । इन्द्रः पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यत इति प्रत्याह । पृच्छामि त्वा चितये देवसख यदि त्वमत्र मनसा जगन्थ । केषु विष्णुस्त्रिषु पदेष्वस्थः केषु विश्वम्भुवनमाविवेशेति ब्रह्मोद्गातारं पृच्छति । अपि तेषु त्रिषु पदेष्वस्मि येषु विश्वं भुवनमाविवेश । सद्यः पर्येमि पृथिवीमुत द्यामेकेनाङ्गेन दिवो अस्य पृष्ठमिति प्रत्याह । केष्वन्तःपुरुष आविवेश कान्यन्तःपुरुष आ-र्पितानि एतद्ब्रह्मन्नपवल्हामसि त्वा किंस्विन्नः प्रतिवोचास्यत्रेत्युद्गाता ब्रह्माणं पृच्छति । पञ्चस्वन्तःपुरुष आविवेश तान्यन्तःपुरुष आर्पितानि । एतत् त्वात्र प्रतिवन्वानो अस्मिन् मायया भवस्युत्तरोमदिति प्रत्याह । प्राञ्चमुप-निष्क्रम्यैकैकशो यजमानं पृच्छन्ति पृच्छामि त्वा परमन्तं पृथिव्या इति २ इयं वेदिः परो अन्तः पृथिव्या इति प्रत्याह ३ महिम्ना पुरस्तादुपरिष्टाच्च वपा-नाञ्चरन्ति ४ सुभूः स्वयम्भूः प्रथममन्तर्महत्यर्णवे । दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः । होता यक्षत् प्रजापतिं महिम्नो जुषतां वेतु पिबतु सोमं होतर्यजेति प्रैषः । तवेमे लोकाः प्रदिशो दिशश्चेति याज्या । अश्वोऽजस्तूपरो गोमृग इति प्राजापत्याः ५ इतरेषां पशूनां प्रचरन्ति ६ वैश्वदेवी क्लृप्तिः ७ पञ्चमेन पृष्ठ्याह्ना शस्यं व्यूल्हस्य ८ ९

तस्य विशेषान् वक्ष्यामः १ अग्निन्तं मन्य इत्याज्यं तस्यैकाहिकमुपरिष्टात् २ प्रउगतृचेष्वैकाहिकास्तृचाः ३ त्रिकद्रुकेषु महिषो यवाशिरमिति मरुत्व-तीयस्य प्रतिपदेका तृचस्थाने । ऐकाहिकोऽनुचरः । सूक्तेष चान्त्य-मुद्धृत्यैकाहिकमुपसंशस्य तस्मिन्निविदं दध्यात् ४ एवं निष्केवल्ये ५ अभि त्यन्देवं सवितारमोण्योरिति वैश्वदेवस्य प्रतिपदेका तृचस्थाने । ऐका-हिकोऽनुचरः । सूक्तेषु चैकाहिकान्युपसंशस्य तेषु निविदो दध्यात् ६ एव-मेवाग्निमारुते ७ चतुर्थं पृष्ठ्याहरुत्तमं ८ ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतं सर्वस्तोमोऽप्तोर्यामो वा ९ भूमिपुरुषवर्जमब्राह्मणानां वित्तानि प्रतिदिश-मृत्विग्भ्यो दक्षिणा ददाति । प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्य-ध्वर्योरुदीच्युद्गातुः । एता एव होत्रकाः अन्वायत्ता अन्वायत्ताः १० १०

अथैतेषामह्नां योगविशेषान् वक्ष्यामो यथायुक्तानि यस्मै यस्मै कामाय भवन्ति

१ अयमेवैकाहोऽतिरात्र अदौ प्रायणीयः २ एषोऽन्त्य उदयनीयः ३ अव्यक्तो मध्ये ४ अहीनेषु वैश्वानर एष एव ५ तावन्तरेण व्यूल्हो दशरात्रः ६ एषा प्रकृतिः सत्राणां ७ तत्रावापस्थानं ८ ऊर्ध्वं दशरात्रादेकाहार्थे महाव्रतं ९ प्राग्दशरात्रादितरेषामह्नां १० द्व्यहार्थे गोआयुषी । त्र्यहार्थे त्रिकद्रुकाः । अभिप्लवत्र्यहं पूर्वं त्रिकद्रुका इत्याचक्षते । चतुरहार्थे त्रिकद्रुका महाव्रतञ्च ११ पञ्चाहार्थेऽभिप्लवपञ्चाहः । उत्तमस्य तु षष्ठात् तृतीयसवनं १२ षडहार्थे-ऽभिप्लवः षडहः । एवंन्याया आवापाः १३ षडहान्ताः पुनः पुनः १४ पूर्णः पूर्णश्च षडहस्तन्त्रतामेव गच्छति १५ १

द्वौ त्रयोदशरात्रौ १ ऋद्धिकामानां प्रथमं । पृष्ठ्यं छन्दोमाश्चान्तरा सर्व-स्तोमोऽतिरात्रः २ न्यायक्लृप्तं व्रतवन्तं प्रतिष्ठाकामा द्वितीयं ३ त्रीणि चतु-र्दशरात्राणि सार्वकामिकं प्रथमं ४ द्वौ पृष्ठ्यावावृत्त उत्तरः ५ तल्पे वोदके वा विवाहे वा मीमांस्यमाना द्वितीयं ६ पृष्ठ्यमभितस्त्रिकद्रुकाः ७ न्याय-क्लृप्तं द्व्यहोपजनं प्रतिष्ठाकामास्तृतीयं ८ चत्वारि पञ्चदश रात्राणि देवत्व-मीप्सतां प्रथमं । प्रथमस्य चतुर्दशरात्रस्य पृष्ठ्यमध्ये महाव्रतं ९ ब्रह्म-वर्चसकामा द्वितीयं । द्वितीयस्य चतुर्दशरात्रस्याग्निष्टुत्प्रायणीयादनन्तरः १० सात्राहैनिका उभौ लोकावाप्स्यतां तृतीयं ११ तृतीयस्य चतुर्दशरात्रस्याग्निष्टुत् प्रायणीयस्थाने न्यायक्लृप्तस्त्र्यहोपजनः शेषः १२ न्यायक्लृप्तं त्र्यहोपजनं प्रति-ष्ठाकामाश्चतुर्थं १३ षोडशरात्रं चतूरात्रोपजनमन्नाद्यकामाः १४ सप्तदशरात्रं पञ्चरात्रोपजनं पशुकामाः १५ अष्टादशरात्रमायुष्कामाः १६ षडहश्चात्र पूर्यते । सतन्त्रस्योपजनं वक्ष्यामः १७ एकान्नविंशतिरात्रमेकरात्रोपजनं ग्राम्या-रण्यान् पशूनवरुरुत्स्यमानाः १८ विंशतिरात्रं प्रतिष्ठाकामाः । अभिजि-द्विश्वजितावभिप्लवादूर्ध्वं १९ २

द्वावेकविंशतिरात्रौ प्रतिष्ठाकामानां प्रथमं । त्रयाणामभिप्लवानां प्रथमा-वन्तराऽतिरात्रः १ ब्रह्मवर्चसकामा द्वितीयं । नवरात्रस्याभिजिद्विश्वजितोः स्थाने द्वौ पृष्ठ्यावावृत्त उत्तरः २ संवत्सरसम्मिता इत्याचक्षते ३ द्वाविंश-तिरात्रं चतूरात्रोपजनमन्नाद्यकामाः ४ त्रयोविंशतिरात्रं पञ्चरात्रोपजनं पशुकामाः

५ द्वौ चतुर्विंशतिरात्रौ प्रजातिकामाः पशुकामा वा प्रथमं ६ षडहश्चात्र पूर्यते । सतन्त्रस्योपजनं वक्ष्यामः । स्वर्गे लोके सत्स्यन्तो ब्रध्नस्य विष्टपं रोक्ष्यन्तो द्वितीयं ७ पृष्ठ्यस्तोमस्त्रयस्त्रिंशो निरुक्तो विशालः पृष्ठ्यस्तोमा एकविंश-त्रिणवत्रयस्त्रिंशाः प्रतिलोमाः पूर्वस्मिंस्त्र्यहेऽनुलोमा उत्तरस्मिन् सवि-शालोऽपि वोत्तर एव त्र्यहः प्रतिलोमोऽनुलोमश्चानिरुक्तमहरावृत्तः पृष्ठ्यस्तोमः ८ त्रिवृदनिरुक्तः ९ ज्योतिरुभयसामा १० संसदामयनमित्येतदाचक्षते । पञ्चविंशतिरात्रमेकरात्रोपजनमन्नाद्यकामाः । षड्विंशतिरात्रं द्विरात्रोपजनं प्रतिष्ठाकामाः । सप्तविंशतिरात्रं त्रिरात्रोपजनमृद्धिकामाः । ग्रष्टाविंशतिरात्रं चतूरात्रोपजनं ब्रह्मवर्चसकामाः । एकान्नत्रिंशद्रात्रं पञ्चरात्रोपजनं परमां विजितिं विजिगीषमाणाः । त्रिंशद्रात्रमन्नाद्यकामाः । षडहश्चात्र पूर्यते सतन्त्रस्योपजनं वक्ष्यामः । एकत्रिंशद्रात्रमेकरात्रोपजनमन्नाद्यकामाः । द्वात्रिंशद्रात्रं द्विरात्रोपजनं प्रतिष्ठाकामाः ११ ३

त्रीणि त्रयस्त्रिंशद्रात्राणि प्रतिष्ठाकामानां प्रथमं । त्रयाणामभिप्लवानामु-परिष्टादुपरिष्टादतिरात्रः १ ब्रह्मवर्चसकामा द्वितीयं । चतुर्णां पञ्चरात्रा-णामावृत्त उत्तमः उत्तमौ चान्तरा सर्वस्तोमोऽतिरात्रः २ उभौ लोकावाप्स्यतां तृतीयं षण्णां पञ्चरात्राणां मध्ये विश्वजिदतिरात्रः ३ ग्रावृत्तास्तूत्तरे त्रयः ४ चतुस्त्रिंशद्रात्रं चतूरात्रोपजनमन्नाद्यकामाः ५ पशुकामानामुत्तराणि चत्वारि । पञ्चत्रिंशद्रात्रः पञ्चरात्रोपजनः ६ षट्त्रिंशद्रात्रे षडह उपजायते । सतन्त्र-स्योपजनं वक्ष्यामः । सप्तत्रिंशद्रात्र एकरात्रोपजनः ७ ग्रष्टात्रिंशद्रात्रो द्वि-रात्रोपजनः । एकान्नचत्वारिंशद्रात्रं त्रिरात्रोपजनमनन्तां श्रियमिच्छन्तः । चत्वारिंशद्रात्रं चतूरात्रोपजनं परमायां विराजि प्रतितिष्ठन्तः । एकचत्वा-रिंशद्रात्रप्रभृतीन्युत्तराणि न्यायेनाष्टाचत्वारिंशद्रात्रात् । पञ्चाशद्रात्रप्रभृतीनि चाषष्टिरात्रात् । द्विषष्टिरात्रप्रभृतीनि चैकोनशतरात्रात् ८ तत्रैकरात्रचतूरा-त्रोपजनानि व्रतवन्ति ९ ४

सप्तैकान्नपञ्चाशद्रात्राणि विपाप्मना वत्स्यन्तः प्रथमं १ ग्रतिरात्रस्त्रीणि त्रिवृन्त्यहान्यतिरात्रो दशपञ्चदशान्यतिरात्रो द्वादशसप्तदशान्यतिरात्रः पृष्ठ्यो-

ऽतिरात्रो द्वादशैकविंशान्यतिरात्रः २ त्रिवृतां प्रथमोऽग्निष्टोमः षोडश्युत्तमः पञ्चदशानां उक्थ्या इतरे विधृतय इत्याचक्षते ३ यमातिरात्रं यमां द्विगुणामिव श्रियमिच्छन्तः ४ द्वावभिप्लवौ गोआयुषी अतिरात्रौ द्वावभिप्लवावभिजि-द्विश्वजितावतिरात्रावेकोऽभिप्लवः । सर्वस्तोमनवसप्तदशावतिरात्रौ महाव्रतं ५ स्वानां श्रैष्ठ्यकामास्तृतीयं । चतुर्णां पृष्ठ्याह्नामेकैकं नवकृत्वः ६ नव-वर्गाणां प्रथमषष्ठसप्तमोत्तमान्यहान्यग्निष्टोमाः ७ उक्थ्या इतरे पञ्च महाव्रतं ८ सवितुःककुभ इत्याचक्षते ९ ५

त्रयाणामुत्तरेषां न्यायक्लृप्ता अभिप्लवाः १ प्रथमस्य तूर्ध्वं चतुर्थात् सर्वस्तोमो-ऽतिरात्रः २ उपसत्सु गार्हपत्ये गुग्गुलुसुगन्धितेजनपैतुदारुभिः पृथक्सर्पींषि विपच्यानुसवनं सन्नेषु नाराशंसेष्वाञ्जीरन्नभ्यञ्जीरंश्च ३ ये वर्चसा न भायुर्ये वात्मानं नैव जानीरंस्त एता उपेयुः ४ आञ्जनाभ्यञ्जनीया इत्याचक्षते ५ एता एव प्रतिष्ठाकामानामाञ्जनाभ्यञ्जनवर्जं ६ एतासामेव सर्वस्तोमस्थाने महाव्रतं ७ ऐन्द्रमत्यन्याः प्रजा बुभूषन्तः ८ एतासामेव सर्वस्तोममुद्धृत्य यथास्थानं महाव्रतं ९ संवत्सरकामानाप्स्यन्त उत्तमं १० अतिरात्रश्चतुर्विंशन्त्रयोऽभिप्लवा नवरात्रोऽभिप्लवौ गोआयुषी दशरात्रो व्रतमतिरात्रः ११ संवत्सरसम्मिता इत्याचक्षते १२ एकषष्टिरात्रं प्रतिष्ठाकामाः । एतासामेव पृष्ठ्यावभितो नवरात्रं १३ तयोरावृत्त उत्तरः १४ शतरात्रमायुष्कामाः । चतुर्दशाभिप्लवा-श्चतुरहोपजनाः १५ इति रात्रिसत्राणि १६ ६

अथ गवामयनं सर्वकामाः १ प्रायणीयचतुर्विंशे उपेत्य चतुरभिप्लवान् पृष्ठ्यपञ्चमान् पञ्च मासानुपयन्ति २ अथ षष्ठं सम्भरन्ति ३ त्रीनभिप्लवान् पृष्ठ्यमभिजितं स्वरसाम्न इति ४ आद्याभ्यां पूर्यतेऽहोभ्यां ५ इति नु पूर्वं पक्षः ६ अथ विषुवानेकविंशः ७ न पूर्वस्य पक्षसो नोत्तरस्य ८ आवृत्ताः स्वरसामानः षडहाश्चोत्तरस्य पक्षसः ९ स्वरसाम्नो विश्वजितं पृष्ठं त्री-नभिप्लवानिति सप्तमन्द्विरात्रोनं कृत्वाऽथ पृष्ठ्यमुखांश्चतुरभिप्लवांश्चतुरो मासानुपयन्ति १० अथोत्तमं सम्भरन्ति । त्रीनभिप्लवान् गोआयुषी दशरात्रं । व्रतोदयनीयाभ्यां सप्तमः पूर्यते ११ इति न्वेकसम्भार्यमुत्तरं पक्षः १२ अथ

द्विसम्भार्यं १३ व्रतोदयनीये एवोत्तमस्य । गोआयुषी सप्तमस्य १४ गोआयुषी वा विहरेयुः १५ गां विश्वजितोऽनन्तरं १६ आयुषं पूर्वं दशरात्रात् १७ अपि वोर्ध्वं विश्वजितः सप्तमं सवनमासं कृत्वोद्धरेयुर्गोआयुषी दशरात्रञ्च १८ अपि वोत्तरस्य पञ्चसोऽहान्येवावर्त्तेरन्ननुलोमाः षडहाः स्युः षडहा वाऽऽवर्त्तरन्ननु-लोमान्यहानि १९ इति गवामयनं २० सर्वे वा षडहा अभिप्लवाः स्युर-भिप्लवाः स्युः २१ ७

गवामयनेनादित्यानामयनं व्याख्यातं १ सर्वे त्वभिप्लवास्त्रिवृत्पञ्चदशाः २ मासाश्च पृष्ठ्यमध्यमा नव । षष्ठसप्तमोत्तमान् वर्जयित्वा ३ बृहस्पति-सवेन्द्रस्तुतौ चाभिजिद्विश्वजितोः स्थाने ४ सप्तमस्य च मासस्योत्तमयो-रभिप्लवयोः स्थाने त्रिवृद्व्यल्हो दशरात्र उद्भिद्बलभिदौ च ५ उत्तमस्य च मासस्यादौ येऽभिप्लवास्त्रय उद्धृत्य तेषां मध्यममथ स्युः पृष्ठ्यमध्यमाः ६ समूढो दशरात्रः ७ १

आदित्यानामयनेनाङ्गिरसामयनं व्याख्यातं १ त्रिवृतस्त्वभिप्लवाः सर्वे २ पृष्ठ्यादयश्चाद्या मासाः पञ्च पूर्वस्य पञ्चसः ३ चत्वारस्तूत्तरस्य पृष्ठ्यान्ता अष्टमादयः ४ उत्तमस्य च मासस्यादौ ये षडहास्त्रयः पृष्ठ्यान्ता एवं तेऽपि स्युः ५ पूर्वौ स्यातामभिप्लवौ ६ २

दृतिवातवतोरयनं १ प्रायणीयोऽतिरात्रः २ त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासं त्रयस्त्रिंशेन मासं ३ व्रतं विषुवत्स्थाने ४ एतैरेव मासैः प्रतिलोमैः पञ्च उत्तरं ५ उदयनीयोऽतिरात्रः ६ एतेषामेवाह्नामतिरात्राविति ७ अपरमन्यत्राप्यादिष्टैः कालपूरणेन चेत् संस्थानियमः ८ ३

कुण्डपायिनामयनं १ मासन्दीक्षिता भवन्ति २ ते मासि सोमं क्रीणन्ति ३ तेषां द्वादशोपसदो भवन्ति ४ सोममुपनह्य प्रवर्ग्यपात्राण्यत्साद्योपनह्य वा मासमग्निहोत्रं जुह्वति ५ मासं दर्शपूर्णमासाभ्यां यजन्ते ६ मासं वैश्वदेवेन

७ मासं वरुणप्रघासैः । मासं साकमेधैः ८ मासं शुनासीरीयेण ९ यदहर्मासः पूर्यते तदहरिष्टिं समाप्याग्निप्रणयनादिधर्मात्सादनादि वौपवसथिकं कर्म कृत्वा श्वोभूते प्रसुनुयुः १० तद्धैक उपसद्य एवानन्तरं कुर्वन्ति तथादृष्टत्वात् सौत्यान्मासानग्निहोत्रादीन् वदन्तः ११ तदनुपपन्नं १२ पश्वर्थं ह्यग्निप्रणयनन्तस्य च श्वःसुत्यानिमित्तं १३ अतिप्रणीतचर्यायां च वैगुण्यं दर्शपूर्णमासयोः । तथाग्निहोत्रस्य १४ सदो हविर्धानान्याग्नीध्रीयाग्नीषोम-प्रणयनवसतीवरीग्रहणानि पश्वर्थानि भवन्ति सुत्यार्थान्येके १५ तत्कालाश्चैव तद्गुणाः १६ सिद्धस्वभावानां न व्यवधानादन्यत्वं यथा पृष्ठ्याभिप्लवयोः १७ सगुणानां ह्येव कर्मणामुद्धार उपजनो वा १८ सुब्रह्मण्या त्वत्यन्तं १९ अनवधृतेहकालसंशयत्वात् २० उत्सर्गमके सुत्योपसद्गुणत्वात् २१ क्रिया त्वेव प्रवृत्ते ह्यन्तमगत्वाऽवस्थाने दोषः २२ त्रिवृता मासं । पञ्चदशेन मासं । सप्तदशेन मासं । एकविंशेन मासं । त्रिणवेन मासं । अष्टा-दशत्रयस्त्रिंशानि । द्वादशाहस्य दशाहानि । महाव्रतञ्चातिरात्रश्च २३ सर्वेण यज्ञेन यजन्ते य एतदुपयन्ति २४ ४

सर्पाणामयनं १ गोआयुषी ईदृशी स्तोमे २ अनुलोमे षण्मासान् । प्रतिलोमे षट् ३ ज्योतिर्द्वादशीस्तोमो विषुवत्स्थाने ४ प्रकाशकामा उपेयुः ५ त्रैवर्षिकं प्रजाकामाः ६ गवामयनं प्रथमः संवत्सरः । अथादित्यानां । अथाङ्गिरसां ७ चत्वारि तापश्चितानि ८ क्षुल्लकतापश्चितं प्रथमं संवत्सरं सदीक्षोपसत्कं ९ तस्य चत्वारः सौत्या मासाः गवामयनस्य प्रथमषष्ठसप्तमोत्तमाः १० त्रैवर्षिकं तापश्चितं । तस्य सौत्यः संवत्सरः ११ उक्तो गवामयनेन । ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतञ्चतुर्विंशानां वैकैकं १२ द्वादशवर्षिकं तापश्चितं । तस्य चत्वारः सौत्याः संवत्सराः । गवामयनशस्याः पूर्वेणैव न्यायेन १३ षट्त्रिंशद्वर्षिकं महातापश्चितं । तस्य द्वादश सौत्याः संवत्सराः । गवामयनशंस्याः पूर्वेणैव न्यायेन । अपि वोत्तरस्य पक्षसो द्वाविंशतिः सवनमासा भवेयुः । त्रयोविंशतिः पूर्वस्य १४ प्रजापतेर्द्वादशसंवत्सरं १५ त्रयस्त्रिवृतः संवत्सरास्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रय एकविंशाः । एतैरेव स्तोमैः शाक्त्यानां षट्त्रिंशद्वर्षिकं १६ एकैकेन नव नव वर्षाणि १७ एतैरेव

स्तोमैः साध्यानां शतसंवत्सरं । एकैकेन पञ्चविंशतिः पञ्चविंशतिर्वर्षाणि १८ एतैरेव स्तोमैर्विश्वसृजां सहस्रसंवत्सरं एकैकेनार्द्धतृतीयान्यर्द्धतृतीयानि वर्ष-शतानि १९ अग्नेः २० अग्निष्टोमसहस्रं २१ सहस्रसाव्यमित्येतदाचक्षते २२ ५

अथ सारस्वतानि १ सरस्वत्याः पश्चिम उदकान्ते दीक्षेरन् २ ते तत्रैव दीक्षोपसदः कृत्वा प्रायणीयञ्च सरस्वतीं दक्षिणेन तीरेण शम्याप्रासे शम्याप्रासेऽहरहर्यजमाना अनुव्रजेयुः ३ संहार्यं उलूखलबुध्नो यूपः ४ चक्री-वन्ति सदोहविर्धानानि ५ आग्नीध्रीयं पत्नीशालञ्च ६ दक्षिणपुरस्तादाह-वनीयस्यावस्थाय ब्रह्मा शम्यां प्रहरेत् । सा यत्र निपतेत् तद्गार्हपत्यस्यायतनं । ततोऽधिविहारः ७ विषमे चेन्निपतेदुद्धृत्य समे विहरेयुः ८ अप्सु चेद्वारुणं पुरोडाशं निर्वपेयुः । आपांनप्त्रे चरुं । अपान्नपादा ह्यस्थादुपस्थं समन्या यन्त्युपयन्त्यन्या इति । आतः समानं सर्वेषां ९ मित्रावरुणयोरयनं १० कुण्डपायिनामयनस्याद्यान् षण्मासानावर्त्तयन्तो व्रजेयः ११ मासि मासि च गोआयुषी उपेयुः । आयुरयुग्मेषु । गौर्युग्मेषु १२ इति न प्रथमः कल्पः १३ अथ द्वितीयः १४ यथामावास्यायामतिरात्रः स्यात् तथा दीक्षेरन् १५ तेऽमावास्यायामतिरात्रं संस्थाप्य तदहरेवामावास्यस्य सान्नाय्यवत्सानपाकुर्युः १६ तं पक्षमामावास्येन व्रजित्वा पौर्णमास्याङ्गामुपेयुः तं पूर्वपक्षमामावास्येन व्रजित्वा पौर्णमास्याङ्गामुपेयुः । पौर्णमासेनोत्तरं व्रजित्वाऽमावास्यायामा-युषमुपेयुः १७ एवमावर्त्तयन्तो व्रजेयुः १८ इन्द्राग्न्योरयनं १९ गोआयुषीभ्यां २० अर्यम्णोरयनं त्रिकद्रुकैः २१ सरस्वतीपरिसर्पणस्य शस्यमुक्तं गवामयनेन २२ एकपातीनि त्वहान्यतिरात्राः २३ पृष्ठ्याहश्चतुर्थं २४ इति नु गतयः २५ अथोत्थानानि २६ प्लाक्षं प्रस्रवणं प्राप्योत्थानं २७ तेयमुनायाङ्कारपचवे-ऽवभृथमभ्युपेयुः २८ उदेत्याग्नये कामायेष्टिर्वैराजतन्त्रा २९ तस्या-मश्वीञ्चपुरुषीं च धेनुके दद्युः ३० एतद्वोत्थानं ३१ ऋषभैकशतानां वा गवां सहस्रभावे ३२ सर्वस्वज्यान्यां ३३ गृहपतिमरणे वा । ज्यान्यां तूत्तिष्ठन्तो विश्वजिताऽतिरात्रेणोत्तिष्ठेयुः । गृहपतिमरण आयुषा । गवा गवां सहस्रभावे ३४ इति शस्यं ३५ ६

अथ सवनीयाः १ क्रतुपशवो वात्यन्तं २ आग्नेयो वैन्द्राग्नो वा ३ आग्नेयं वा रथन्तरपृष्ठेषु ४ ऐन्द्रं बृहत्पृष्ठेषु ५ एकादशिनान् वा ६ प्रायणीयोदयनीययोरतिरात्रयोः समस्तानालभेरन् । ऐन्द्राग्नमन्तर्द्धौ वा ७ अन्वहं वैकैकश एकादशिनान् ८ न त्वेवैकादशिनीं न्यूनामालभेरन् ९ एतेन चेत् पश्वयनेनेयुस्तृतीयेऽहनि दशरात्रस्य द्वात्रिंशतमेकादशिन्यः सन्तिष्ठन्तेऽत एतस्मिन् नवरात्रेऽतिरिक्तपशूनालभेरन् १० वैष्णवं वामनमेकविंशे ११ ऐन्द्राग्नं त्रिणवे । वैश्वदेवं त्रयस्त्रिंशे । द्यावापृथिवीयां धेनुञ्चतुर्विंशे । तस्या एव वत्सं वायव्यं चतुश्चत्वारिंशे । आदित्यां वशामष्टाचत्वारिंशे । मैत्रावरुणीमविवाक्ये १२ वैश्वकर्मणमृषभं महाव्रते । आग्नेयमुदयनीयेऽतिरात्रे १३ अपि वैकादशिनीमेव त्रयस्त्रिंशीं पूरयेयुः । अभिजिद्विश्वजिद्विषुवन्ति द्विपशूनि स्युः १४ ७

अथ सत्रिधर्माः १ दीक्षणादिपित्र्याणां दैवानाञ्च धर्माणां प्राकृतानां निवृत्तिः २ सर्वशश्च वर्जयेयुर्ग्रामचर्यां ३ सरणं ४ विवृतस्मयनं ५ स्त्र्यभिहासं ६ अनार्याभिभाषणं ७ अनृतं क्रोधं अपां प्रगाहणं ८ अभिवर्षणं ९ आरोहणं च वृक्षस्य नावो वा १० रथस्य वा ११ दीक्षिताभिवादनं १२ दीक्षितस्त्वौपसदं १३ उभौ सुन्वन्तं १४ समसिद्धान्ताः पूर्वारम्भिणं १५ अभितप्ततरं वा १६ सर्वसाम्ये यथावयः १७ नृत्यगीतवादितानि १८ अन्यांश्चाव्रत्योपचारान् १९ न चैनान् बहिर्वेदिसदोऽभ्याश्रावयेयुः २० नोदक्यान् २१ नो एवाभ्युदियान्नाभ्यस्तमियात् २२ तेषाञ्चेत् किञ्चिदापदोपनमेत् त्वमग्ने व्रतपा असीति जपेत् २३ आख्याय वेतरेषूपहवँल्लीप्सेत २४ अवकीर्णिनं तैरेव दीक्षितद्रव्यैरपर्युप्य पुनर्दीक्षयेयुः २५ आग्रयणकाले नवानां सवनीयान् निर्वपेयुः २६ दीक्षोपसत्सु व्रतदुघ आदयेयुः २७ तेषां व्रत्यानि २८ पयो दीक्षासु २९ व्यतिनीय कालमुपसदाञ्चतुर्थमेकस्या दुग्धेन ३० तावदव त्रिभिस्तनैः । तावद्द्वाभ्यां । एकेन तावदेव ३१ सुत्यासु हविरुच्छिष्टभक्षा एव स्युः ३२ धानाः करम्भः परिवापः पुरोडाशः पयस्येति तेषां यद्यत् कामयीरंस्तत्तदुपविगुल्फयेयुः ३३ आशिरदुघो दध्यर्थं ३४ सौम्यं वा

विगुल्फं निर्वपेयुरिति शौनको यावच्छरावं मन्येरन् ३५ वैश्वदेवमेके ३६ बार्हस्पत्यमेके ३७ सर्वान् वाऽनुसवनं ३८ अपि वान्यत्र सिद्धङ्गार्हपत्ये पुनरधिश्रित्योपव्रतयेरन् ३९ अन्यान् वा पथ्यान् भक्षानामूलफलेभ्यः ४० एतेन वर्त्तयेयुः पशुना च ४१ ८

तस्य विभागं वक्ष्यामः १ हनू सजिह्वे प्रस्तोतुः २ श्येनं वक्ष उद्गातुः ३ कण्ठः काकुद्रः प्रतिहर्त्तुः ४ दक्षिणा श्रोणिर्होतुः । सव्या ब्रह्मणः । दक्षिणं सक्थि मैत्रावरुणस्य । सव्यं ब्राह्मणाच्छंसिनः । दक्षिणं पार्श्वं सांसमध्वर्योः ५ सव्यमुपगातॄणां । सव्योंऽसः प्रतिप्रस्थातुः । दक्षिणं दोर्नेष्टुः । सव्यं पोतुः ६ दक्षिण ऊरुरच्छावाकस्य । सव्य आग्नीध्रस्य । दक्षिणो बाहुरात्रेयस्यः । सव्यः सदस्यस्य । सदश्चानूकश्च गृहपतेः ७ दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य ८ सव्यौ पादौ गृहपतेर्भार्यायै व्रतप्रदस्य । ओष्ठ एनयोः साधारणो भवति तं गृहपतिरेव प्रशिंष्यात् ९ जाघनीं पत्नीभ्यो हरन्ति । तां ब्राह्मणाय दद्युः १० स्कन्ध्याश्च मणिकास्तिस्रश्च कीकसा ग्रावस्तुतः ११ तिस्रश्चैव कीकसा अर्द्धं च वैकर्त्तस्योन्नेतुः । द्वयोस्तूक्तयोः सूत्रयोस्त्रीणि त्रीणि । अर्द्धञ्चैव वैकर्त्तस्य क्लोमा च शमितुस्तद्ब्राह्मणाय दद्यात् १२ यद्यब्राह्मणः स्यात् १३ शिरः सुब्रह्मण्यायै । यः श्वःसुत्यां प्राह तस्याजिनं । इडा सर्वेषां । होतुर्वा । ता वा एताः षट्त्रिंशतमेकपदा यज्ञं वहन्ति १४ षट्त्रिंशदक्षरा वै बृहती १५ बार्हताः स्वर्गलोकास्तत् प्राणेषु चैव तत् स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति १६ स एषः स्वर्ग्यः पशुर्य एनमेवं विभजन्त्यथ येऽतोन्यथा तद्यथा सेलगावा पापकृतो वा पशुं विमथ्नी-रंस्तादृक्तत् १७ तां वा एतां पशोर्विभक्तिं श्रौत ऋषिर्देवभागो विदाञ्चकार तामु हाप्रोच्यैवास्माल्लोकादुच्चक्राम तामु ह गिरिजाय बाभ्रव्याया मनुष्यः प्रोवाच ततो हैनामेतदर्वाङ्मनुष्या अधीयते १८ ९

सर्व समानगोत्राः स्युरिति गाणगारिः कथ ह्याप्रीसूक्तानि भवेयुः कथं प्रयाजा इति १ अपि नानागोत्राः स्युरिति शौनकस्तन्त्राणां व्यापित्वात् २ गृहपति-गोत्रान्वया विशेषाः ३ तस्य राद्धिमनु राद्धिः सर्वेषां ४ प्रवरास्त्वावर्त्तेर-

न्नावापधर्मित्वात् ५ जामदग्ना वत्सास्तेषां पञ्चार्षेयो भार्गवच्यावनाप्नवानौर्वजामदग्नेति ६ अथ हाजामदग्नानां भार्गवच्यावनाप्नवानेति ७ आर्ष्टिषेणानां भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति ८ बिदानां भार्गवच्यावनाप्नवानौर्वबैवेदेति ९ यस्कवाधौलमौनमौकशार्कराक्षिसार्ष्टिसावर्णिशालङ्कायनजैमिनिदैवन्त्यायनानां भार्गववैतहव्यसावेतसेति १० श्यैतानां भार्गववन्यपाथति ११ मित्रयुवां वाध्र्यश्वेति त्रिप्रवरं वा भार्गवदैवोदासवाध्र्यश्वेति १२ शुनकानां गृत्समदेति त्रिप्रवरं वा भार्गवशौनहोत्रगार्त्समदेति १३ १०

गोतमानामाङ्गिरसायास्यगौतमेति ।
उचथ्यानामाङ्गिरसौचथ्यगौतमेति ।
रहूगणानामाङ्गिरसराहूगणयगौतमेति ।
सोमराजकानामाङ्गिरससौमराज्यगौतमेति ।
वामदेवानामाङ्गिरसवामदेव्यगौतमेति ।
बृहदुक्थानामाङ्गिरसबार्हदुक्थगौतमेति ।
पृषदश्वानामाङ्गिरसपार्षदश्वरुवैपेति ।
अष्टादंष्ट्रं हैके ब्रुवतेऽतीत्याङ्गिरसमष्टादंष्ट्रपार्षदश्ववैरूपेति १
ऋक्षाणामाङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति २
कक्षीवतामाङ्गिरसौचथ्यगौतमौशिजकाक्षीवतेति ३
दीर्घतमसामाङ्गिरसौचथ्यदैर्घतमसेति ४
भरद्वाजाग्निवेश्यानामाङ्गिरसबार्हस्पत्यभारद्वाजेति ५ ११

मुद्गलानामाङ्गिरसभार्म्यश्वमौद्गल्येति ।
तार्क्ष्यं हैके ब्रुवतेऽतीत्याङ्गिरसन्तार्क्ष्यभार्म्यश्वमौद्गल्येति १
विष्णुवृद्धानामाङ्गिरसपौरुकुत्स्यत्रासदस्यवेति ।
गर्गाणामाङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति ।
आङ्गिरसशैन्यगार्ग्येति वा २
हरितकुत्सपिङ्गशङ्खदर्भभैमगवानामाङ्गिरसाम्बरीषयौवनाश्वेति ३
मन्धातारं हैके ब्रुवतेऽतीत्याङ्गिरसं मान्धात्राम्बरीषयौवनाश्वेति ४

संकृतिपूतिमाषतरिडशम्बुशैवगवानामाङ्गिरसगौरिवीतसांकृत्येति ५
शाक्त्यो वा मूलं शाक्त्यगौरिवीतसांकृत्येति ६ १२

करावानामाङ्गिरसाजमील्हकरावेति ।
घोरमु हैके ब्रुवतेऽवकृष्याजमील्हमाङ्गिरसघौरकारावेति १
कपीनामाङ्गिरसामहीयवोरुद्धयसेति ।
अथ य एते द्विप्रवाचना यथैतच्छौङ्गशैशिरयः भरद्वाजाहशुङ्गाः कताः शैशिरयः
२ तेषामुभयतः प्रवृणीतैकमितरतो द्वावितरतः ३ द्वौ वेतरतस्त्रीनितरतः ४
नहि चतुर्णां प्रवरोऽस्ति न पञ्चानामतिप्रवरणं ५ आङ्गिरसबार्हस्पत्यभारद्वाज-
कात्यात्कीलेति ६ १३

अत्रीणामात्रेयार्चनानसश्यावाश्वेति ।
गविष्ठिराणामात्रेयगाविष्ठिरपौर्वातिथेति १ चिकितगालवकालबवमनुत-
न्तुकुशिकानां वैश्वामित्रदेवरातौदलेति २ श्रौमतकामकायनानां वैश्वामित्र-
दैवश्रवसदैवतरसेति ३
धनञ्जयानां वैश्वामित्रमाधुच्छन्दसधानञ्जयेति ।
अजानां वैश्वामित्रमाधुच्छन्दसाज्येति ।
रोहिणानां वैश्वामित्रमाधुच्छन्दसरौहिणेति ।
अष्टकानां वैश्वामित्रमाधुच्छन्दसाष्टकेति ४
पूरणवारिधापयन्तानां वैश्वामित्रदेवरातपौरणेति ५
कतानां वैश्वामित्रकात्यात्कीलेति ।
अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति ।
रेणूनां वैश्वामित्रगाथिनरैणवेति ।
वेणूनां वैश्वामित्रगाथिनवैणवेति । शालङ्कायनशालाद्धलोहिताद्धलोहित-
जह्नूनां वैश्वामित्रशालङ्कायनकौशिकेति ६ कश्यपानां काश्यपावत्सारा-
सितेति । निध्रुवाणां काश्यपावत्सारनैध्रुवेति । रेभाणां काश्यपावत्साररै-
भ्येति । शरिडलानां शारिडलासितदैवलेति ७ काश्यपासितदैवलेति वा
८ १४

वासिष्ठेति वसिष्ठानां येऽन्य उपमन्युपराशरकुण्डिनेभ्यः १ उपमन्यूनां वासिष्ठाभरद्वस्विन्द्रप्रमदेति । परासराणां वासिष्ठशाक्त्यपाराशर्येति । कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति २ अगस्तीनामागस्त्यदार्ढच्युते-ध्मवाहेति । सोमवाहो वोत्तम आगस्त्यदार्ढाच्यतसोमवाहेति ३ पुरो-हितप्रवरो राज्ञां ४ अथ यदि सार्ष्टं प्रवृणीरन् मानवैलपौरूरवसेति ५ इति सत्राणि ६ तान्यदक्षिणानि ७ तेषामन्ते ज्योतिष्टोमः पृष्ठ्यशमनीयः ८ सहस्रदक्षिणः ९ अन्यो वा प्रज्ञातदक्षिणः १० दक्षिणावता पृष्ठ्यानि शम-येरन्निति विज्ञायते ११ स एव हेतुः प्रकृतिभावे प्रकृतिभावे । नमो ब्रह्मणे नमो ब्रह्मणे १२ नम आचार्येभ्यो नम आचार्येभ्यः १३ नमः शौनकाय नमः शौनकाय १४ १५

## श्रौतसूत्रपरिशिष्टभागः

भृगूणां न विवाहोऽस्ति चतुर्णामादितो मिथः
श्यैतादयस्त्रयस्तेषां विवाहो मिथ इष्यते

षण्णां वै गौतमादीनां विवाहो नेष्यते मिथः
दीर्घतमा औचथ्यः कक्षीवांश्चैकगोत्रजाः

भरद्वाजाग्निवेश्यर्क्षाः शुङ्गाः शैशिरयः कताः
एते समानगोत्राः स्युर्गर्गानेके वदन्ति वै

पृषदश्वा मुद्गला विष्णुवृद्धाः
कण्वोऽगस्त्यो हरितः सङ्कृतिः कपिः
यस्कश्चैषां मिथ इष्टो विवाहः
सर्वैरन्यैर्जामदग्न्यादिभिश्च
यावत् समानगोत्राः स्युर्विश्वामित्रोऽनवर्त्तते
तावद्वसिष्ठश्चात्रिश्च कश्यपश्च पृथक् पृथक्

द्व्यार्षेयाणां त्र्यार्षेयसन्निपाते अविवाहः

त्र्यार्षेयाणां पञ्चार्षेयसन्निपाते अविवाहः

विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गोतमः
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः

सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते
एक एव ऋषिर्यावत् प्रवरेष्वनुवर्त्तते
तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसाङ्गणादित्यसमानप्रवरैर्विवाहो विवाहः

Reference:

Vidyāratna, Rāmanārāyaṇa, ed., *The Śrauta Sūtra of Āśwalāyana with the commentary of Gārgya Nārāyaṇa*, Calcutta (Asiatic Society, 1989).